REPRINT FROM THE PANDIT.

॥ श्रीः ॥

# न्यायसिद्धाञ्जनम् ।

भगवद्बोधायनमतानुवर्तिनां श्रीसंप्रदायानुयायि-
नामभिमतपदार्थनिरूपणपरं प्रकरणम् ।

श्रीदेवेदान्ताचार्यापराभिधेन कवितार्किककेसरिणा
सर्वतन्त्रस्वतन्त्रधिषणेन श्रीदेवेङ्कटनाथ-
देशिकेन प्रणीतम् ।

सत्संप्रदायाचार्येण सर्वतन्त्रस्वतन्त्रपं·स्वामिश्रीराममिश्र-
शास्त्रिणा पूर्वाचार्यपरिचर्यायै परिशोधितम् ।

# NYĀYASIḌDHĀNJANAM

BY

VENKAṬANĀTHA DEṢIKA.

EDITED BY

S. S. A. S. T. S. P. S. M. M. RA'MA MIS'RA S'A'STRI',

PROFESSOR, SANSKRIT COLLEGE, BENARES.





काश्याम् ।

मेडिकल् हाल् नामकमुद्रालये मुद्रयित्वा प्रकाशितम् ।

१९५८ वैक्रमाब्दे । १९०१ ईस्वी ।

॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।



यस्मिंश्चिरन्तनगिरामिह तत्परत्व-

तत्तत्प्रलम्भनविमूर्छितश्लोकहानम् ।

आयत्तमस्ति भववारिधिपोतपादो

रामानुजार्यमुनिरेष जयत्यजस्रम् ॥

॥ श्रीः ॥

श्रियै नमः ।

श्रीधराय नमः ।

श्रीमते रामानुजाय नमः ।

# भूमिका ।

अद्यत्वेऽपि सन्ति निखिललोकविश्रुतयशसः सर्वविद्यापारदृश्वानस्त्रयीत्राणकृतपरिकराः कवितार्किककेसरिणः श्रीभाष्यकारसत्संप्रदायमहाध्वजे पट्टपटायितातिप्रौढप्रकटपाण्डित्या दण्डायमानदीर्घकीर्त्तयश्च प्रणीताऽष्टोत्तरशतमहानिबन्धा गद्यपद्यप्रणयनाद्याचार्याः, यदुपज्ञं यदुपक्रमं वा दार्शनिकदीक्षाशिक्षाः प्रथन्ते भारतावान्तरदेशेषु, तेऽमी प्रातःस्मरणीयसुनामानः श्रीदेमन्तो वेङ्कटनाथदेशिकाः, याञ्जगति गुरुनामाग्रहणस्मृतिस्मृत्या जनास्तद्विदोऽन्वर्थतया गुणग्राहितया च श्रीदेवेदान्ताचार्या इत्यभिदधाना गौरवेण नामाग्रहणेऽपि स्वीयां वाचं प्रायः पुनन्ति । तेषामेवैष बुद्धिवैभवविलसितस्पन्दायितो न्यायसिद्धाञ्जननामा संदर्भः । यं ते महर्षेर्बोधायनस्य सारस्वतमहोदधौ तत्रभवतां श्रीदेरामानुजभगवत्पादानां शिष्यसंप्रदायवाङ्मयमहोर्मिषु वा अञ्जसा प्रवेष्टुकामान् यथासुखं तत्र नेतुमररचन् ।

भवन्ति चात्र ग्रन्थे षट् प्रकरणानि जडद्रव्यपरिच्छेदः, जीवपरिच्छेदः, ईश्वरपरिच्छेदः, नित्यविभूतिपरिच्छेदः, बुद्धिपरिच्छेदः, षष्ठश्चाद्रव्यपरिच्छेदः अत्र परिच्छेदे सामान्यचिन्तनान्तो ग्रन्थो वर्तते अत्रैव च ग्रन्थावसानं जातं तदनन्तरं कोशो न मिलति दक्षिणप्रदेशेष्वपि

न मिलति यत्रैतद्ग्रन्थस्य प्राचुर्येण प्राप्तिः संभाविता । अत एव तद्देशीयपुस्तकेषु ।

न क्वाप्यतः परमदृश्यत कोपशेष-
स्तच्छेषपूरणकृतिः परिहासहेतुः ।
ज्ञातव्यमन्यदपि तैर्निरणायि सम्यग्-
ग्रन्थान्तरेष्विति न किंचिदिहास्ति चिन्त्यम् ॥

इत्यन्ते लिखितमस्ति । अस्ति चैष ग्रन्थितुः प्रमेयनिरूपणप्रचुरो ग्रन्थो यथा तेषामेव प्रमाणनिरूपणप्रचुरो न्यायपरिशुद्धिसंदर्भः परपराकरणप्रचुरश्च तत्त्वमुक्ताकलापसत्संदर्भः । यथोक्तं तैरिहैव ग्रन्थे आदौ ।

यन्न्यायपरिशुद्धान्ते संग्रहेण प्रदर्शितम् ।
पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे ॥ इति,

ततश्च प्रमेयनिरूपणप्रचुरेऽस्मिन् ग्रन्थे सामान्यचिन्तनग्रन्थोऽपि चेद्विकलस्तर्हि षष्ठपरिच्छेदे अर्द्धाधिकोग्रन्थोऽग्रेततो न मिलतीत्यनुमिमीमहे ।

अस्तु किमप्येतत्तथाऽपि प्रेक्षावतां प्राचीनाचार्यसंदर्भेषु निगूढतत्त्वमनुसंधित्सतां सतां सर्वथाऽयं ग्रन्थो भवत्युपादेयः, न हि भोगभाजः खण्डेऽप्यवर्तुलेऽपि च खण्डलड्डुके उपेक्षावन्तः । अस्माभिः पूर्वमुद्रितेषु लेखप्रसादेनाकठिनेष्वपि महाकरग्रन्थेषु अतिगभीरयुक्तिगर्भतया गोमुखव्याघ्रभूतेषु जनानां निरपायसंश्रयदानार्थमयमुपक्रमोऽस्मदीयः । पूर्वं हि भारते वर्षे हेत्वाभासमहोदधिमन्थनमन्दरायमाणमतयो, विविधोपाधिलक्षणातिविशदगहनमहाह्रदावगाहनातिप्रथितवक्रतर्का वागूर्मिशङ्का निग्रहस्थानसमुद्भावनाकुण्ठकण्ठीरवरवाः प्रतिवादिभैरवा व्युत्पत्तिमहासंपद्वशीकृतसर्वार्थरहस्या युक्ता इव योगिनोऽचिन्ति-

तोपस्थितसर्वार्था अभूवन्नभङ्गुरगुणगणा गणेयतमा वेङ्कटनाथसदृशा छिन्ना अपि अबाधितव्युत्पत्तिभाजो विद्वांस इति तेषां श्रीभाष्यादिप्रमेयप्रचुरग्रन्थेष्वभग्नाऽभवद् व्युत्पत्तिः। अधुनातनास्तु प्रायः पूर्वोक्तसाधनोदासीना इत्यक्षरार्थज्ञानमात्रतृप्ता वाक्यार्थज्ञाने मनोऽनुनयनमप्यनपेयन्तो यथाकथं चिदेव तृप्यन्तीति मा स्म ते विस्मरन्नाकरग्रन्थकाठिन्यं तत एव चोपाददीरन्नन्ततः प्रकरणग्रन्थसाहाय्यं यतो न भवेदर्थावबोधवैधुर्यं न चान्यथाऽर्थाख्यातिरिति दूरदेशेभ्यः साम्प्रदायिकप्रकरणानि यथासमयं संग्राहंसंग्राहं विस्तृणीमहे, आशास्महे चैतद्देशीयानां न्यायसिद्धाञ्जनादिप्रकरणसाहाय्येन श्रीभाष्यादिसुगहनगभीरार्थगर्भग्रन्थेष्वचलां सुदृढां च व्युत्पत्तिम् ॥

कमिव चोपमिनुयामिममकारणसहजसुहृदं विद्याविवर्द्धनं साम्प्रदायिकरत्नं मथुरास्थश्रीरामानुजपाठशालालङ्करणभूतं लक्ष्मणाचार्यं यो ऽप्रार्थितानिङ्गितावबुद्धानप्यस्मदर्थान् भृशं पूरयितुमनाः स्वहस्तेनावदधानस्तैलङ्गाक्षरकोशान्न्यायसिद्धाञ्जनपुस्तकं देवाक्षरेष्ववतार्य्य विशोध्य अयत्नसिद्धसुयशोमात्रभाजनं मां व्यधत्त। तदेष एवैतस्य शुभकार्यस्याविकलं यशो लप्सीष्ट, वरिषीष्ट चैनमेवैवंविधशुभकर्मानुष्ठानजाऽदृष्टश्रीर्दासीष्ट चैकतममपि स एव स्वाभिमतं पुण्यस्यांशं स्वीयशयेन मह्यमपीति सस्पृहमीहे ॥

अस्मि च विशेषतः कृतज्ञोऽधुना देवैः सहासीनस्य नैसर्गिकपण्डितप्रियस्य दीनेषु पुरस्कृतदयस्य विविधविद्यावेदिकाया वाराणस्या वररत्नस्य, सुख्यातेर्डाक्टरलाज़रस*महाशयस्य येन स्वीयं लाभमप्यनभ्यर्थ्य आर्थिकीं क्षति-

* E. J. Lazarus & Co of Benares.

मप्यक्षुण्णमनसा ऽविगणय्य आपवर्गिकात्तिचिरप्रख्याता-र्चिरादिमार्गस्य अवातभीता अनैलस्नेहपूराः सततमुज्ज्वलन्तो विद्यासामर्थ्यानुनीतदिव्यपुरुषानुमोदिना ब्रह्मविद्यावर्त्तिकाः सत्पात्रलब्धपदा धन्याध्वनीनानां वाह्याभ्यन्तरध्वान्तध्वंसना एतावन्तः श्रीसाम्प्रदायिका ग्रन्थाः प्रकाशमुपयापिताः ।

आशासे च स संयुत्तीष्ट सुमनोभिः सुजनैः स्पर्द्धिषीष्ट चासनार्ह्लब्धये सुत्राम्णाऽपि, वर्द्धिषीष्टालौकिकैर्भोगैः, विपत्सीष्ट क्लेशकलिलैर्निवर्तिषीष्ट सांसारिकाधिजालैः, किं बहुना नावर्तिषीष्ट सोऽस्माल्लोकादमुं लोकं क्लेशकषायबहुलमित्यभ्यर्थये भगवन्तं सर्वकामफलप्रदं सुरासुरगुरुं सर्वसमाराध्यं देवतासार्वभौममनादिनिधनं नारायणं देवम् ॥

इति, काश्यामगस्त्यमुन्याश्रमाश्रमः,

स्वामिश्रीराममिश्रशास्त्री,

श्रावणशुक्लप्रतिपदि गुरौ । सं. १९५८



श्रीः

श्रियै नमः

श्रीधराय नमः

॥ श्रीमते रामानुजाय नमः ॥

# न्यायसिद्धाञ्जनशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ | पं |
|---|---|---|---|
| क्षणोऽपि | क्षणोऽपि | ५ । | ५ |
| श्रीविष्ण | श्रीविष्णु | १९ । | ६ |
| चक्षषः | चक्षुषः | २० । | ९ |
| भिक्षक | भिक्षाक | २८ । | ६ |
| सवरूप | सर्वरूप | २९ । | ४ |
| सिद्धापा | सिद्धोपा | ३० । | ७ |
| पञ्चभौ | पाञ्चभौ | ३० । | ६ |
| निर्वृत्तरपि | निर्वृत्तेरपि | ३० । | ५ |
| दिवाभा | दिवाभौ | ३० । | ९ |
| मायास्तत्त्व | मायातस्तत्त्व | ३८ । | ११ |
| नाताव | नार्तोव | ३८ । | १ |
| ब्रह्माण | ब्रह्माणं | ४४ । | २ |
| स्वभाव | स्वभावं | ४९ । | १ |
| पूर्वभा | पूर्वं भा | ५० । | ६ |
| धृष्टद्य | धृष्टद्यु | ५५ । | ५ |
| एव | अतएव | ६७ । | १० |
| प्रार्यश्चितन वा | प्रायश्चित्तेन वा | ७४ । | ८ |
| चाहत्यु | चाहेत्यु | ८० । | १० |
| सिद्धारिष्ट | सिद्धोरिष्ट | ८९ । | १२ |
| युक्तति | युक्तेति | ८९ । | १३ |
| सर्वध्यासा | सर्वाध्यासा | ९७ । | ४ |
| सिद्धः | सिद्धेः | १०१ । | ८ |
| प्रतिपान | प्रतिपादन | १०४ । | ८ |

निर्गतः पाठः

द्रव्यस्याश्रय उपादानम आगन्तुकोऽपृथक्सिद्धो धर्मोऽवस्था विशेषतस्तूत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुणनियत पूर्वभाव्यवस्थाविशिष्टं तदेव वस्तूपादानं यथा घटत्वावस्थाविशिष्टमृद्द्रव्यापेक्षया पिण्डत्वावस्थाविशिष्टं तदेव द्रव्यं, तदनुगुणशब्देन प्रतिसर्गावस्थाव्यवच्छेदः परिणामिन्मुख्यातिरिक्तेनाकारेणापेक्षितं कारणं निमित्तम् ।

१०४ पत्रे अन्तिमपंक्तौ अन्तिमाक्षरानन्तरम् ।

| अशुद्धम् | शुद्धम् | पृ॰ | पं॰ |
|---|---|---|---|
| असमवायात्य | असमवायीत्य | १०५ । | १ |
| जागरदि | जागरादि | १२२ । | ८ |
| सर्वद्रेस | सर्वदेश | १२४ । | १ |
| सुषप्त्या | सुषुप्त्या | १२८ । | २ |
| मानेवृत्ति | मनोवृत्ति | १२८ । | १२ |
| ज्ञातर्वि | ज्ञातुर्वि | १२८ । | २ |
| व्यनो | व्यानो | १२९ । | ३ |
| न्यायमसप्त | न्यायमन्यत्सप्त | १२९ । | ४ |
| दुःखज्ञा | दुःखाज्ञा | १२९ । | १ |
| गुणा वा | गुणो वा | १३२ । | ४ |
| त्वमेव | त्वामेव | १४० । | ९ |
| भट्टयभा | भट्टप्रभा | १४० । | १३ |

| अशुद्धम् | शुद्धम् | पृ. | पं. | अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|---|---|
| धर्म्यति | धर्म्यंति | १४१ | १ | केवलविरुद्धदि- | केवलविरुद्धदि- | | |
| व्यवाहा | व्यवहा | १४४ | ७ | गिन्तांशेभ्यः | गन्तांशेभ्यः | | |
| शानव | शांतव | १५६ | ६ | कोणवि | कोणविरुद्ध- | | |
| निबन्धनः नतद | निबन्धनः तद | १५९ | १३ | | दिगन्तांशेभ्यः | | |
| सवस | सर्वस | १६८ | १ | | कोणवि | १७२ | १० |

इतः परमस्मिन् देशे दक्षिणप्रदेशेषु चावशिष्टोग्रन्थो न मिलति शम् ।

॥ श्रीः ॥ ॥ श्रीः ॥ ॥ श्रीः ॥ ॥ श्रीः ॥ ॥ श्रीः ॥

भूदासूर्भावुकाय भगवन्तो भगवतोऽन्तरङ्गपारिषद्याः पूर्वाचार्या जनस्यास्या-
सहायस्य साहसिकेष्वन्यतमस्य सर्वथा निक्रान्तसत्पथस्य तथापि
सोऽहमाकाङ्क्षतोऽहसतीयेषु कनिष्ठकाधिष्ठितस्य ॥



श्रीः

श्रियै नमः

श्रीधराय नमः

॥ श्रीमते रामानुजाय नमः ॥

# न्यायसिद्धाञ्जनविषयसूचीपत्त्रम् ।



## द्वितीये जीवपरिच्छेदे ।

## ईश्वरपरिच्छेदः ।

॥ श्रीः ॥

श्रियै नमः ।

श्रीधराय नमः ।

श्रीमते रामानुजाय नमः ।

# न्यायसिद्धाञ्जनम् ।

## वेदान्तप्रकरणम् ।

## विशिष्टाद्वैतब्रह्मनिरूपणपरम् ।

## श्रीवेदान्ताचार्यप्रणीतम् ।

श्रीमद्वेङ्कटनायकः श्रुतिशिरस्तात्पर्य्यपर्य्याप्तधीः ।
लब्धार्थो वरदार्य्यपादरसिका*द्रामानुजाचार्य्यतः ॥
बालानामतिवेलमोहपटलावष्टम्भसीदद्दृशाम् ।
सम्यक् तत्त्वनिरीक्षणाय तनुते सत्तर्कसिद्धाञ्जनम् ॥ १ ॥

सदसद्भूमिकाभेदैस्ततसिद्धान्तनाटकैः ।
उपप्लुतस्य तत्त्वस्य शुद्ध्यर्थोऽयमुपक्रमः ॥ २ ॥
यन्न्यायपरिशु†द्धान्ते संग्रहेण प्रदर्शितम् ।
पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे ॥ ३ ॥

प्रतिज्ञा। अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्, तत्र प्रकार-प्रकारिणोः प्रकाराणां च मिथोऽत्यन्तभेदेऽपि विशिष्टैक्या-

* एते श्रीदरामानुजाचार्या न श्रीभाष्यकाराः किन्तु न्यायसिद्धाञ्जनकृतां श्रीवेदान्ताचार्याणां गुरवो वरदाचार्यशिष्याश्च । यच्चास्माभिस्तत्त्वमुक्ताकलापे "श्रुत्वा रामानुजार्यात्सदसदपि ततस्तत्त्वमुक्ताकलाप"मिति श्लोकस्थरामानुजाचार्यपदेन श्रीभाष्यकारा अभिधित्सिता इत्यभिहितं तद्भ्रान्त्यैवेति प्रतिपद्यताम् ।

† न्यायपरिशुद्धिर्नाम श्रीवेदान्ताचार्यप्रणीतो निर्विस्तरो ग्रन्थः पदार्थनिरूपणपरः ।

न मिलति यत्रैतद्ग्रन्थस्य प्राचुर्येण प्राप्तिः संभाविता । अत एव तद्देशीयपुस्तकेषु ।

न क्वाप्यतः परमदृश्यत कोषशेष-
स्तच्छेषपूरणकृतिः परिहासहेतुः ।
ज्ञातव्यमन्यदपि तैर्निरणायि सम्यग्-
ग्रन्थान्तरेष्विति न किंचिदिहास्ति चिन्त्यम् ॥

इत्यन्ते लिखितमस्ति । अस्ति चैष ग्रन्थितुः प्रमेयनिरूपणप्रचुरो ग्रन्थो यथा तेषामेव प्रमाणनिरूपणप्रचुरो न्यायपरिशुद्धिसंदर्भः परपराकरणप्रचुरश्च तत्त्वमुक्ताकलापसत्संदर्भः । यथोक्तं तैरिहैव ग्रन्थे आदौ ।

यन्न्यायपरिशुद्धान्ते संग्रहेण प्रदर्शितम् ।
पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे ॥ इति,

ततश्च प्रमेयनिरूपणप्रचुरेऽस्मिन् ग्रन्थे सामान्यचिन्तनग्रन्थोऽपि चेद्विकलस्तर्हि षष्ठपरिच्छेदे अर्द्धाधिकोग्रन्थोऽग्रेतनो न मिलतीत्यनुमिमीमहे ।

अस्तु किमप्येतत्तथाऽपि प्रेक्षावतां प्राचीनाचार्यसंदर्भेषु निगूढतत्त्वमनुसंधित्सतां सतां सर्वथाऽयं ग्रन्थो भवत्युपादेयः, न हि भोगभाजः खण्डेऽप्यवर्तुलेऽपि च खण्डलड्डुके उपेक्षावन्तः । अस्माभिः पूर्वमुद्रितेषु लेखप्रसादेनाकठिनेष्वपि महाकरग्रन्थेषु अतिगभीरयुक्तिगर्भतया गोमुखव्याघ्रभूतेषु जनानां निरपायसंश्रयदानार्थमयमुपक्रमोऽस्मदीयः । पूर्वं हि भारते वर्षे हेत्वाभासमहोदधिमन्थनमन्दरायमाणमतयो, विविधोपाधिलक्षणातिविशदगहनमहाह्रदावगाहनातिप्रथितवक्रनक्रा वागूर्मिशङ्का निग्रहस्थानसमुद्भावनाकुण्ठकण्ठीरवरवाः प्रतिवादिभैरवा व्युत्पत्तिमहासंपद्वशीकृतसर्वार्थरहस्या युक्ता इव योगिनोऽचिन्ति-

स्वराध्वान्ताभास्वररूपाभ्यामनेकान्तत्वाच्च । न च ग्राहकभेदाद् ग्राह्यभेद इव अन्योन्याश्रयणात् चक्षुःश्रोत्रादिभेदस्य रूपादिग्राह्यभेदोपाधित्वात् ग्राहकभेदेऽपि च ग्राह्यैक्यप्रतीतेरुदाहृतत्वात् ग्राहकैक्येऽपि नीलपीतादिग्राह्यभेददर्शनात्, अन्यत्र च तदविशेषात् अत एव स्पर्शाद्येकद्वित्रिचतुःस्वभाववाय्वाद्यणुचतुष्कवादो निरस्तः । एवं च वैशिष्ट्यमपि तात्त्विकं विकल्पश्चाबाधितः प्रमाणमिति सिद्धम् । संब*न्धानुपपत्त्यादिप्रलापस्तु तार्काङ्गपञ्चकान्यतमहान्यादिविध्वस्तः । किं च ।

परः शतपरिच्छेदात् परस्तादपि वादिभिः ।
उपलम्भबले स्थैर्यं तदादौ किं न गृह्यते ॥
इदमित्थन्त्वयोः किंचिद्यदि केनापि भज्यते ।
इदं नास्तीति वाच्योऽपि भङ्गोऽन्यतरभङ्गतः ॥
विसंवादादिसाध्येषु विकल्पत्वादि हेतवः ।
व्याकुलाः पक्षहेत्वादिबाधाबाधविकल्पतः ॥
अतः सिद्धोऽयं तात्त्विकद्रव्याद्रव्यविभागः ।

क्षणभङ्गवादनिराकरणम्

तानि च द्रव्याणि स्थिराण्येव क्षणभङ्गे प्रमाणाभावात्, स हि प्रत्यक्षतोऽनुमानतो वा, नाद्यः

---

* अयमत्र निगूढार्थः संबन्धसंबन्धिभाव-धर्म-धर्मिभावनिराकरणार्थं प्रवृत्ता यद्यव्याहतवाचोभवेयुर्भवेयुरपि ते विजयिनः, न च ते तथा, धर्मधर्मिभावनिराकरणस्यापि धर्म्यङ्गीकारपुरस्सरतया धर्मिणो धर्माभावस्यापि च धर्मभूततया तत्सिद्ध्यसिद्धिभ्यामेव तस्य व्याघातात् । किं च भिन्नस्य धर्मत्वे घटोऽपि पटधर्मतामियात्, अभिन्नत्वे च धर्मधर्मिभावो नावकल्प्येत इत्यादिकमपि बौद्धस्य दुर्मनीषितमेव अनेनापि त्वदीयवाक्येन बुबोधयिषितार्थस्य संबन्धासंबन्धयोस्तव व्याहत्यवश्यम्भावात् ।

† यदि धर्मः स्वविशिष्टवृत्तिः स्यात् स्ववृत्तिः स्यात्, यदि धर्मधर्मिसंबन्ध एकत्र पर्याप्तवृत्तिः स्यादन्यत्र न स्यात् यद्युभयवृत्तिः स्यात्सांशः स्यादित्यादिकुतर्काणां प्रसञ्जकप्रसञ्जनीयव्याप्ति-प्रतितर्काप्रतिघात-प्रसञ्जनीयविपर्ययपर्यवसान-प्रसञ्जनीयानिष्ट-परपक्षासाधकत्वरूपतर्काङ्ग पञ्चकान्यतमहानिविध्वस्तरूपत्वान्न तदुत्थानसम्भवानापीति भावः ।

प्रत्यक्षस्य विपरीतरूपत्वात् प्रत्यभिज्ञाप्रत्यक्षेण स्थिरत्वस्यैव सिद्धेः, भ्रान्तिरियमिति चेत् कारणदोषबाधकप्रत्ययाभावे तत्त्वायोगात्, यौक्तिकबाधेन दोषोऽप्युन्नीयत इति चेत् केयं युक्तिः करणाकरणाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासप्रसङ्गात्मिका, समर्थश्चेत् कुर्य्यादित्यकुर्वद्दशायामपि करणप्रसङ्गात्मिका वेति चेन्न सहकारिसन्निधौ कुर्वत्स्वभावत्वस्य सहकार्य्यभावप्रयुक्तकार्य्याभाववत्त्वादेर्वा सामर्थ्यपदार्थत्वात्, ततश्च समर्थस्यैव करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वादेकत्र समावेशः।

ननु तावप्येकस्य कथमुपपद्येते इति चेन्न तत्तत्सामग्रीसंतानप्रतिनियतकालतया तदुपपत्तेः तत्सामग्रीविशेषसंबन्धासंबन्धयोरपि चोद्यमपरिहार्य्यमिति चेन्न भिन्नकालभाविसामग्रीविशेषादेव परिहृतत्वात् तज्जातीयस्यैव बीजक्षणस्य समर्थबीजारम्भे त्वयाऽप्येतदपरिहार्य्यं तत्पूर्वक्षणस्वभावादित्यपि तत एव दत्तोत्तरम्। अन्यथाऽनुपलभ्यमानानन्तक्षणतत्स्वभावकल्पनागौरवप्रसङ्गात्, अन्वयव्यतिरेकवतामपि सहकारिणामकारणत्वे दुर्निर्वहमुपादानस्यापि कारणत्वम्। यदि च कालभेदभिन्नयोरेव करणाकरणयोः सहकारिसंनिध्यसंनिध्योर्वा वस्तुभेदकत्वं देशभेदभिन्नयोरपि करणाकरणयोः सामर्थ्यासामर्थ्ययोः सहकारिसंनिध्यसंनिध्योर्वा तयोर्भेदकत्वप्रसङ्गेन क्षणे ऽपि क्षुद्यमानेऽनवधिकभेदप्रसङ्गेन क्वचिदेकं न सिद्ध्येदिति शून्यवादप्रसङ्गः। देशभेदे स्वसंनिध्यसंनिधिभ्यामेव तदुपपत्तिरिति चेन्न, तयोरपि तद्वदेव विरुद्धयोर्भेदकत्वप्रसङ्गात, परस्परविरुद्धपूर्वापरकालसंबन्ध एवैकस्य कथमिति चेन्न स्वापेक्षया पूर्वापरत्वस्यासिद्धेः, न हि स्वप्रागभावप्रध्वंसाव-

च्छिन्नकालसंबन्धित्वं वस्तुनो ब्रूमः अन्यापेक्षया पूर्वापरयोरपि कालयोरेतदपेक्षया स्वकालत्वे विरोधाभावः क्षणेऽपि स्वीकार्य्यः यथा परमाणुद्वयापेक्षया पूर्वापरीभूतस्यापि तन्मध्यदेशस्य परमाण्वन्तरं प्रति स्वदेशतया न तस्य तत्संबन्धविरोधः, अन्यथा पूर्ववत् क्षणेऽपि क्षुण्णः तथाऽपि पूर्वापरकालयोस्तदुपाध्योर्वा विरुद्धयोस्तेजस्तमसोरिव कथमेकत्र समावेशः, अविरोधे तु यौगपद्यप्रसङ्ग इति चेन्न यौगपद्ये हि तयोर्विरोधः न त्वेकवस्तुसंबन्धे अन्यथैकज्ञानसंबन्धे ऽपि विरोधप्रसङ्गेन प्रत्यभिज्ञास्वरूपस्यानुत्पत्तिप्रसङ्गात्। यदि पुनः कालयोः स्वरूपभेदेन तादात्म्यविरोधो विवक्षितः तर्हि रूपरसयोरिव नैकवस्तुसंबन्धं प्रतिभन्त्स्यति। न चैकस्यानेकसंबन्धः क्वचिदपि नास्तीति वाच्यम् क्षणिकनिर्धर्मकपरमाणावपि पुञ्जदशायामनेकनैरन्तर्य्यादेरभ्युपेतत्वादिति। एतेन वर्तमानत्वप्रत्ययात् क्षणभङ्गसिद्धिरिति वदन्तोऽपि निरस्ताः, न हि तेन पूर्वापरकालसंबन्धाभावो गृह्यते, न चाक्षिप्यते तद्विरोध्यवर्त्तमानत्वमात्रनिषेधात्, तस्य च तदानीं प्रागभावप्रध्वंसाभावनिषेधात्मकत्वेन पूर्वापरकालसंबन्धाविरोधित्वात् प्रत्यक्षेणेन्द्रियसंबन्धक्षणो गृहीतः क्षणान्तरं तु तस्य कुतः सिद्धमिति चेन्न प्रत्यभिज्ञानस्य तद्बाधस्य चोक्तत्वात् प्रत्यभिज्ञात्वादेव दीपप्रत्यभिज्ञावत् सर्वापि प्रत्यभिज्ञा भ्रान्तिरिति चेत् पूर्वोक्तेनैव सोपाधिकत्वात्, एतदनुमानमात्रबाध्यत्वे प्रत्ययत्वादेष सर्वः प्रत्ययो भ्रान्तिरिति माध्यमिकमतसमुत्थानस्य दुष्परिहरत्वात् क्षणभङ्गपक्षे भ्रान्तिरूपाऽपि प्रत्यभिज्ञास्मृतिमात्रमपि नोपपद्यते इत्यात्मनि वक्ष्यामः। ततश्च व्याप्तिप्रतिसन्धानाद्यनुपपत्तेरनुमानमात्रमेव निर्मूलमिति कुतः क्षणभङ्गानुमानम्।

यत् सत् तत् क्षणिकं यथा घटः सन्तश्चामी भावा इत्यपि न, भावशब्देन विश्वपक्षीकारे पक्षहेतुदृष्टान्तभेदासिद्धिः, घटव्यतिरिक्तपक्षीकारेऽपि घटस्य क्षणिकत्वासंप्रतिपत्तेर्दृष्टान्तत्वायोगः, विरुद्धधर्माध्यासस्य च परिहृतत्वात्। अत एव प्रदीपादिदृष्टान्तोऽपि प्रत्युक्तः तेषामपि त्रिचतुरक्षणस्थायित्वाभ्युपगमात् अस्तु तर्हि क्षणोपाधिर्दृष्टान्तः स हि न स्थिरः तथात्वे क्षणावच्छेदकत्वायोगादिति चेन्न स्थिरैरेव परस्परावच्छिन्नारम्भावसानैस्तदवच्छेदोपपत्तेः, परस्परावच्छेदश्च युगपद्विशिष्टबुद्धिविषयतया सिद्धः यथा दीर्घयोरेव मानदण्डयोर्विरुद्धदिक्प्रसृतयोर्मध्ये किञ्चित्संयुक्तयोः परस्परसंयोगावच्छिन्नांशेनाल्पतरदेशावच्छेदः कर्तुं शक्यः। एवं कालेऽपीति न कश्चिद्दोषः। माभूदन्वयः यदक्षणिकं तदसत् यथा शशविषाणमिति व्यतिरेकः स्यात्, न स्यात् त्वदभिमतक्षणिकत्वासिद्धेरेव तन्निरूपिताक्षणिकत्वासिद्धेस्तस्य व्याप्यत्वग्रहणायोगात्। चिरकालस्थायित्वविवक्षायां तु निःस्वभावे शशशृङ्गे तदयोगः। अथ शशशृङ्गाभावो दृष्टान्तः स तर्हि सन्नेव प्रामाणिकत्वात् भावेतरत्वलक्षणमसत्त्वमस्तीति चेन्न भावान्तराभाववादे तस्याप्यसिद्धेः अन्यत्राप्यभावस्येव भावस्यापि सुवचत्वात् प्रत्यक्षत्वादिविरोधपरिहारकष्टस्याविशिष्टत्वादिति।

केचित्तु नित्यमपि किञ्चित्तत्वं बुद्धोपदिष्टमिति सत्त्वाख्यसाधनमागमबाधितं कृत्वा ध्रुवभावित्वमेव हेतुमभिमन्यन्ते तथा हि यद् ध्रुवभावि न तद्धेतुसापेक्षम् अन्यथा ध्रुवभावित्वविरोधात् अतः कार्याणां ध्रुवभाविनः प्रध्वंसस्याहेतुकत्वसिद्धेर्विलम्बायोगादुदी-

यमानमेव वस्तु तेन ग्रस्यत इति तत्र ध्रुवभावित्व-शब्देन तत्समकालभावित्व-तदनन्तरभावित्वनियमतन्मात्रजन्यत्वतदेकसामग्रीजन्यत्वाहेतुकत्वाद्यर्थविवक्षायां यथायथमसिद्धिव्याघातसाध्याविशेषादिदोषादेष्यत्वनियममात्रमवशिष्यते, तच्च भवतामपि विसभागसन्तानारम्भककपालक्षणतदविनाभूतप्रतिसंख्यानिरोधादिना ऽनैकान्तिकमिति, अन्यथा सर्वेषामप्युत्तरक्षणानामेष्यत्वाविशेषात् प्रथमक्षण एव सर्वक्षणोत्पत्तौ विश्वविनिवृत्तिप्रसङ्गः आस्थानिवृत्त्यर्थं क्षणिकत्वमुपदेष्टव्यमिति चेत् अहोमहाधार्मिकस्यानलीकवादिनो महानयमधर्मः प्रसज्येत सूक्ष्मधियस्तत्रैवास्थानिवृत्तिप्रसङ्गाच्च विश्वानित्यतामात्रोपदेशादपि च तत्सिद्धेः, अन्यथा शून्योपदेशस्यैवावश्यकर्तव्यत्वप्रसङ्गादिति । प्रत्यनुमानानि च विगीता प्रत्यभिज्ञा स्वविषये प्रमा अबाधितबुद्धित्वात् स्वलक्षणबुद्धिवत्, सा हि स्वविषये प्रमैवास्माकं, वैभाषिकस्यापि यत्सन्न तत्क्षणिकं यथा संप्रतिपन्नं नित्यं, सन्तश्चामी भावा इति यत्प्रतीयते तदक्षणिकं यथा शशशृङ्गमिति भवद्व्यवहारेणापि प्रसज्यते, प्रध्वंसः सहेतुकः पूर्वावधिमत्त्वात् पटवदित्यादीनि च स्वयमुन्नेयानि एवं द्रव्यस्य स्थिरत्वं सिद्धं तच्च ।

द्रव्य-विभागः । द्वेधा जडाजडतया प्रत्यक्पराग्दितरतयाऽपि वा द्रव्यम् ।
षोढा त्रिगुणानेहोजीवेश्वरभोगभूति-मतिभेदात् ॥

धीकालभोगभूतीरविवक्षित्वा गुणादिरूपत्वात् ।
देहात्मेशविभागार्थं त्रेधा तत्त्वं विविञ्चते केचित् ॥

परत एव भासमानं जडं तदन्यदजडं, स्वस्मै भासमानं प्रत्यक् परस्मै भासमानं परागिति व्यवहरन्ति तेना-

जडाया अपि मतेः पराक्त्वं सिद्धम्। यत्तु नीतिमालायां नारायणार्य्यैरुक्तं ज्ञानस्य तु पराक्त्वाभावमात्रमेव न तु प्रत्यक्त्वमिति एतदपि पूर्वपक्षप्रोक्तदृग्विषयत्वमात्राधीनसिद्धित्वरूपेदन्त्वाभावाभ्युगमादिति मन्तव्यम्। एवं हि तत्र पूर्वपक्षितं तस्य नीलादिवदिदमित्यनवभासात् पराक्त्वाभावेन प्रत्यक्त्वं च विद्यत इति। तत्र रजोगुणकत्वतमोगुणकत्वमहदाद्यवस्थार्हत्वानि त्रिगुणलक्षणानि अध्यक्षादिभिर्यथासम्भवं नानावस्थस्य तस्य सिद्धेः तच्चाधःप्रभृतिदेशेष्वनन्तम् ऊर्ध्वं हि भोगविभूत्यवच्छिन्नं नित्यविभूतेस्तमःपरत्वश्रुतेः त्रिगुणस्य च तदनन्तमसंख्यातप्रमाणं चेति वचनात् तच्च विचित्रसृष्ट्युपकरणत्वान्मायाविकारान्प्रकरोतीति प्रकृतिः विद्याविरोधादिभिरविद्यादिश्चोच्यते समविषमविकारसंतानांश्च कालभागभेदाभ्यामारभते इदं च परिस्पन्दादियोग्यभूतेन्द्रियपरिणामदशायामपि निश्छिद्रमेव तत एव हि स्वकार्य्यव्यापकत्वं द्वयोरन्यतरस्य वा स्पर्शशून्यतया न सप्रतिघत्वविरोधः वाय्वादिभूतचतुष्टयं हि स्पर्शवदस्पर्शेनाकाशेन व्याप्तम्। इदमेव त्रिगुणं पूर्वावस्थोपमर्दकावस्थाभेदाच्चतुर्विंशतितत्त्वानि मूलप्रकृतिर्महानहङ्कार इन्द्रियाण्येकादश पञ्चतन्मात्राणि पञ्च महाभूतानि चेति। नन्वेकस्य कथं बहुधाऽवस्थितविश्वात्मना परिणामः एकस्यैव मृत्पिण्डस्य घटशरावादिरूपेणेवेति चेन्न निरवयवे तथाऽनुपपत्तेः, सावयवत्वे वा बहूनामेव बहुधा परिणामप्रसङ्गात् तथा च गतमेकोपादानवादेन एकमेव सदनेकभागात्मकमव्यक्ताख्यमुपादानमिति चेन्न विकल्पासहत्वात्, तथा हि किमेकत्वमनेकत्वं चैकाश्रयमिति मन्यसे उतैकत्वमंशिनि अंशेषु चानेकत्वमिति यद्वा परिषद्वनसेनादिष्विवानेकेषा-

मेव सतामेकत्वमेकोपाधिसंबन्धायत्तमिति न प्रथमः, व्याघातात् अन्यथा भेदाभेदवादाय कथं कुप्येत्, न द्वितीयः अवयव्यङ्गीकारप्रसङ्गात् तदभ्युपगमेऽपि तस्मादेकस्माज्जगदुत्पत्त्यभावात् तदंशा एव हि ततो भिन्ना बहुधा परिणमन्ति ततोवरमनारूढनिरर्थकैकद्रव्यैः परमाणुभिरेव जगद्द्रव्यारम्भः अत एव न तृतीयः पृथक्पृथगारम्भकत्वे समुदायनिर्देशस्य निरर्थकत्वात् वास्तविकस्य चैकत्वस्य वनादिष्वप्यसंभात् औपाधिकैक्यव्यपदेशस्य च वैशेषिकाद्यभिमतानन्तपरमाणूपादानवादेऽप्यविशेषात्, अत एकमनेकधा परिणमतीति कल्पना विवर्तवादस्य प्रागूरूपमिति । अत्र ब्रूमः ।

प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात् ।
निरंशस्यापि घटते प्रादेशिकविकारिता ॥

न तावत्सर्वमद्रव्यं स्वाश्रयव्यापि संयोगादेरन्यथोपलम्भात् नापि सर्वमाश्रयैकदेशवर्ति स्वाभावसामानाधिकरण्यरहितधर्मोपलब्धेः ।

अतोविभुष्वणुषु च ग्राह्याः प्रादेशिका गुणाः ।
तथा चाभ्युपगम्यन्ते सर्वैर्वैशेषिकादिभिः ॥

अत्र यद्यपि विभुषु निमित्तभूतमूर्तद्रव्यसंयोगावच्छिन्ने प्रदेशे गुणान्तरोत्पत्तिरिष्यते तथाऽपि मूर्तद्रव्यसंयोगस्यैव प्रादेशिकत्वं कुतः सिद्धं, न हि विभुषु स्वतः प्रदेशमिच्छथ,न च संयोगोपाधिके प्रदेशे संयोगस्योत्पत्तिः परस्पराश्रयप्रसङ्गात्, संयोगविशेषात् प्रदेशभेदसिद्धिः सिद्धे च तस्मिन् प्रादेशिकसंयोगोत्पत्तिरिति, अत एव मूर्तैर्घटादिभिर्विभुषु स्वपरिमाणानुरूपप्रदेशावच्छेद इत्यपि वार्तम् अणुद्वयसंयोगे तदनुपपत्तेश्च अतः सामग्रीविशेषादुत्प-

घमान एव संयोगो निरवयवेऽपि परमाणौ परममहति वा वस्तुनि स्वाभावसामानाधिकरण्यमनुभवन् स्वाभावाभावात्मकस्वानुबन्धेन यथोपलम्भप्रतिनियतदेशभेदधियमुपदधातीति प्रमाणबलादभ्युपगन्तव्यम् । एवमिहापि निरवयवेऽपि त्रिगुणे परमेश्वरसंकल्पविशेषपर्य्यवसितैः सामग्रीभेदैः स्वाभाविकसंविभक्ताश्रयाः प्रतिनियतप्रदेशाः परिणतिभेदाः प्रादुःषन्तीति, तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरिति किं नोपपद्यते, स्पन्दस्पर्शादिभेदाश्रयांशानामपि भेदास्त एव विलक्षणधर्माः यथा निर्भिदाकाशवादे प्रदेशानां संयोगविशेषास्तीव्रतरशब्दादिधर्मा एव वा भेदाः तद्वदत्रापि। नन्वेवमप्यनतिलङ्घनीयैव भेदाभेदवागुरेति चेन्न ईदृशभेदाभेदप्रसङ्गस्य वैनाशिकमतेऽप्यविवादात् अविरोधाच्च, तस्य चातत्त्ववादे हि विरोधं ब्रूमः न पुनस्तथाभूतस्यानथापरिणामे अवस्थारूपयोरेकत्वबहुत्वयोः कालभेदेन परिहारात् तथा च भाष्यम्--कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावदेकत्वावस्थाप्रहाणेन बहुत्वावस्था तत्प्रहाणेनैकत्वावस्थेति न कश्चिद्विरोध इति, भवत्ववस्थारूपस्यैकत्वस्य पूर्वापरभाविना बहुत्वेनाविरोधः तद्द्रव्यस्वरूपैक्येन तु विरोधः स्यात्, न स्यात् तद्द्रव्यस्य ह्यतद्द्रव्यत्वं विरुद्धं न तु तस्यैव सतोऽनेकधर्मयोगोपाधिकं बहुत्वं, स्मरति च भगवान् पराशरः ।

परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ इति,

अस्तु वा स्वतःसांशत्वं पिण्डवदव्यक्तस्य तथापि पिण्डवदेव न भेदाभेदावयविवादप्रसङ्गः । नन्वेवं यथांशं

स्वकार्य्यारम्भकत्वे किमेकीभावावस्थाकल्पनेनेति चेन्न यदि वयं कापिलवत् कल्पयेमहि तदैवमुपालभ्येमहि कारणश्रुतिसमधिगता स्वैकत्वावस्था न कल्पनागौरवानुयोगविषयः, न च नैरर्थक्यं श्रुतिबाधपरिहाराय प्रयोजनकल्पनोपपत्तेः, न चैकत्वमौपाधिकत्वादवास्तविकं संपिण्डितानामेकारम्भादेकत्वारम्भस्यैव लघुत्वात् अवयविभङ्गे चैतत् स्थापयिष्यामः। न चैवमपि पराभिमतपरमाणुपुञ्जमात्रत्वमाशङ्कनीयं गन्धरसरूपस्पर्शादिरहितपरस्पराप्रतिघातकसत्त्वरजस्तमोरूपगुणत्रयाश्रयपरस्परसुश्लिष्टपञ्चभूतसूक्ष्मद्रव्यरूपत्वेन श्रुत्यादिसिद्धे पराभिमतपरमाणुस्वभावगन्धाभावेनार्थान्तरत्वसिद्धेः।

यत्त्वौपाधिकभेदाभेदवादिनं प्रति भाष्ये ब्रह्मण उपाधिसंसर्गादपि छेदनाद्यनुपपत्तिकथनं तद् ब्रह्मस्वरूपस्य निष्कलत्वाच्छेद्यत्वादिवचनबलमवलम्ब्य अन्यथा ब्रह्मस्वरूप एव सविकारत्वापत्तौ निर्विकारत्वश्रुतेरनवकाशत्वप्रसङ्गात् तत्र सर्वज्ञत्वात् सर्वांशगतसुखदुःखादिप्रतिसंधानप्रसङ्गोदुष्परिहरः, इह त्वंशभेदप्रतिनियतविकारेषु न स्वभावसङ्कर इति, एतेन परमाणुकारणवादो निरस्तः---जालालोकविलोकनीयत्रसरेणुशब्दवाच्यद्रव्यातिरिक्ताप्रत्यक्षाणुकल्पने प्रमाणाभावात् तेष्वेव मात्रया भेदमवलम्ब्य परमाणुद्व्यणुकत्र्यणुकादिव्यपदेशः प्रमाणग्रन्थेषु तेषामेव रूपाद्यनुद्भवदशायां गृह्यमाणगन्धाश्रयगन्धवाहानीतसूक्ष्मद्रव्यवदचाक्षुषत्वादिसम्भवात्, परमाणोरप्रत्यक्षत्वव्यवहारः क्वचित् कृतोऽपि न विरुध्यते। न च पवनानीतगन्धाश्रयद्रव्येषु परमाणुत्वं भवतामपीष्टं परमाणूनां प्रत्यक्षगुणाश्रयत्वानभ्युपगमात्, अतः प्रत्यक्षादागमाद्वा न भवदभिमतपरमाणुसिद्धिः। अनुमानानि तु

पश्यामः अणु॒ रिणतारतम्यं क्वचिद् विश्रान्तं परिमाण-तारतम्यरूपत्वात् महत्परिमाणतारतम्यवदिति चेन्न ता-रतम्यरूपत्वादित्येतावतापि व्यभिचाराभावेन परिमाण-विशेषणस्य व्यर्थत्वात् पारिमाण्डल्यविवक्षयाऽणुशब्दप्रयो-गेऽन्योन्याश्रयणात् महत्त्वापकर्षतारतम्यस्य त्रसरेणावेव पर्य्यवसिततत्वाभ्युपगमात्. सामान्यतः परिमाणापकर्षता-रतम्यविवक्षया प्रयोगेऽपि तद्विश्रान्तेरपि दृश्यमान एवोप-पत्तेः। एवमवयवापकर्षतारतम्यविश्रान्तेरपि, अस्तु वा त-स्याविश्रान्तिः तथाऽप्याधिक्यन्यूनताभ्याम् प्रमाणसिद्धा-भ्यां सर्षपमहीधरादिपरिमाणाविशेषप्रसङ्गः परिहृतः, अन-न्तत्वाविशेषेऽपि परापरजातीयेषु क्षणदिवसपक्षमाससंव-त्सरचतुर्युगकल्पादिषु चाधिक्ययूनतयोर्भवद्भिरप्यभ्युपग-तत्वात्। विप्रतिपन्नं कार्य्यंद्रव्यारब्धं महत्त्वे सति चाक्षुष-त्वात् चाक्षुषद्रव्यत्वात् इत्यादीनां विपक्षे बाधकाभा-वादप्रयोजकत्वं द्रव्यचाक्षुषताप्रकर्षोमहत्त्वावयवसंख्या-प्रकर्षानुविधायी दृष्टस्तद्धेतुक एव, अत स्तदभावे चाक्षुषत्वं न स्यादिति चेन्न यथोपलम्भं योग्यतास्वीकारात्, अन्यथा महावयवारब्धत्वस्यापि व्याप्तावनुप्रवेशप्रसङ्गात्, लाघवं चास्मन्मते वायवीयतैजसाप्यपार्थिवत्रसरेण्वादेरपि पूर्व-पूर्वभूतात्मककार्य्यद्रव्यारब्धत्वादस्मन्मतेन सिद्धसाधन-त्वं च कार्य्यावयवित्वसाधनेऽपि चाक्षुषतयाऽस्मदुपगतेन कालेनानैकान्त्यं दुष्परिहरं परिदृश्यमानमेव परमाणुमि-च्छतां महत्त्वविशेषणमसिद्धं च, चाक्षुषद्रव्यत्वादेव महत्त्व-साधनमपि पूर्ववद् दूष्यम्। पृथिवीत्वं नित्यसमवेतवृत्ति घटपटजातित्वात् सत्तावदित्यादिकुटिलानुमानान्यपि पू-र्ववद् विपक्षे बाधकाभावात् विषयनियमराहित्येनातिप्र-

सङ्गकत्वात्, पृथिवीत्वं नित्यवृत्ति न भवति पृथिवीमात्रजातित्वात् घटत्ववदित्यादिभिस्तादृशैरनुमानैः प्रतिपक्षयितुं शक्यत्वात्, अभिमतविशेषपर्यवसानासिद्धेश्च निरूपका नानुमानेषु गणयन्ति। घटादीनां सर्वेषां नित्येश्वराश्रितत्वाभ्युपगमात् अतिरिक्तसमवायानभ्युपगमाच्च, सिद्धसाधनत्वं च नित्यवृत्तीति साधनेऽपि घटादिरूपेण परिणतस्यापि त्रिगुणद्रव्यस्य स्वरूपतो नित्यत्वाभ्युपगमात् स एव दोषः। एवमारम्भकाणामणूनां कृत्स्नैकदेशसंयोगविकल्पेनाधिकपरिमाणद्रव्यानारम्भकत्वसभागत्वादिचोद्यं परमाणुदूषकैः सर्वैरपि क्रियते, भाष्यकारैश्च महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्। इत्यस्मिन्नधिकरणे तदेव चोद्यं कृतं तदैतन्माध्यमिकानामेवोपपद्यते न त्वन्येषां तथा हि सौत्रान्तिकाद्यैरपि पुञ्जदशायां परमाणूनां संयोगानभ्युपगमेऽपि परस्परमावृतत्वानावृतत्वादिकं दिगवच्छेदभेदेन स्वीकार्यं ज्ञानमात्रवादिनोऽपि ज्ञानस्यैकस्यानेकज्ञेयाकारसंबन्धे कृत्स्नैकदेशविकल्पस्तदवस्थ एव। ज्ञेयमिथ्यात्वं तु न तत्परिहारः मिथ्याभूतेऽप्युल्लेखावश्यं भावात्।

यस्तु प्रत्यक्षाण्येव सूक्ष्मद्रव्याणि निर्भागाण्यभ्युपगच्छति तस्यापि विभूनां निरवयवानां संयोगे तदेव चोद्यं स्थितं, यस्तु विभुद्रव्यमपि नैच्छत् तस्यापि सामान्ये स्यात् तस्याप्यनभ्युपगमे संयोगसमवायादावनेकनिष्ठे स्यात् न हि द्रव्य एवेदं चोद्यमिति नियमोऽस्ति, द्रव्याणामेव भागवत्त्वयोग्यतेति चेत् तर्ह्यणुविभुव्यतिरिक्तद्रव्याणामित्यपि ग्राह्यं सत्यं, कथं तर्हि भाष्यं दृश्यमानातिरिक्तकल्पनाभिप्रायं निर्भागतयोपलभ्यमानस्यापि यः सावयवतां कल्पयति तस्य सर्वं द्रव्यं द्रव्यारम्भकमवयवतः संयुज्यैवारभते

दिगवच्छेदभेदोऽप्यवयवगत एवेति व्याप्तिः स्यात्, ततः पराभिमतप्रतिष्ठितासिद्धिरिति प्रत्यक्षागमसिद्धाएवेश्वरादिषु यथा प्रमाणमङ्गीकार्यम् अत एव कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति सूत्रे श्रुतेस्तु शब्दमूलत्वादित्यादि च परिहारसूत्रम्। अस्तु तर्हि प्रत्यक्षसिद्धैरेव सूक्ष्मद्रव्यैर्जगदारम्भः, मैवं स्वतन्त्रारम्भे शास्त्रविरोधात् परतन्त्रारम्भाभ्युपगमे यथागमं प्रकृतेरपि स्वीकार्यत्वात् भूतचतुष्टयपूर्वभाविनश्च प्रपञ्चस्य तदारम्भणीयत्वविरोधात् महाभूतचतुष्टयावयवानामाकाशशब्देनाभिधानमिति भाष्यं भूतानामन्योन्योपादानोपादेयत्वविशिष्टसृष्टिक्रमप्रक्रियाविरोधश्च। भूतचतुष्टयातिरिक्तं नास्तीति चेन्न आगमविरोधात् तथा त्रसरेणूनामेव गन्धादिरहितावस्थाऽस्त्विति स्वीकारे तद्वद्विभागापत्तिः स्वीकार्य्येति सैव मूलप्रकृतिरिति सिद्धं, सा च समत्रैगुण्या मूलप्रकृतिः तस्यामपि मात्रया भेदमवलम्ब्याव्यक्ताक्षरविभक्ताविभक्ततमोरूपावस्थाचतुष्टयमामनन्ति। उक्तं च न्यायसुदर्शने वरदभट्टारकैः द्विविधाः स्मृतिकाराः केचिदव्यक्तकारणवादिनः केचित् त*मः कारणवादिनः अव्यक्तस्यैव सूक्ष्मावस्थाभेदोऽक्षरं तमश्च नातीव भेद इत्यव्यक्ते पर्यवस्यतामभिप्रायः तमपि भेदमुररीकृत्य तमसि पर्यवस्यतां तस्मादुभयेषामविरोध इति। यत्तु भाष्यादिष्वव्यक्तसहपठिताक्षरशब्दस्य चेतनविषयतया बहुश उपादानं तत्परव्याख्यानमनुरुध्य वा स्वरूपतो निर्विकारे जीवे सृज्यत्ववचनाच्चिद्रूपविकारवत्त्वेऽपि यथाक्षरशब्दप्रवृत्तिः तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेऽपि शक्तिकल्पनोपपद्यत इति प्रतिपादयितुं

* अतः क्रकमीति पाणिनीयेन तमस्कारणवादिन इति सूचितम्।

वा क्वचित् क्षरे प्रकृतिविशेषे अक्षरशब्दप्रयोगस्य मुख्यत्वायोगात् परब्रह्मस्वरूपाक्षरसंबन्धेन लक्षणायां प्रयोजनाभावात् जीवसंबन्धेनाजहल्लक्षणायां लयविशेषादिप्रतिपादनौचित्यात्, उभावेतौ लीयेते परमात्मनि इत्यादिना द्वयोरपि लयाभिधानाच्चात्राजहल्लक्षणैव युक्तेत्यभिप्रायेण वेति न कश्चिद्विरोध इति। अव्यक्ताहङ्कारावस्थाव्यवहितोत्तरपूर्वावस्थाविशिष्टं त्रिगुणं महान् तच्छब्दवाच्यत्वमेव वा तल्लक्षणम्। एवमहंकारादिष्वपि भाव्यम् अध्यवसायरूपवृत्तिर्महानिति सांख्याः यथाहुः अध्यवसायोबुद्धिरिति तदसत् अध्यवसायस्यात्मधर्मत्वात्, यदि परं तन्निमित्तत्वमात्रं महतः तावतैव बुद्ध्यध्यवसायादिप्रयोगविषयत्वं, न च तन्निमित्तत्वमात्रं लक्षणमतिव्याप्तेः, अवान्तरविशेषस्याप्यनवधारणात् अवधारयतां तु तदपि लक्षणम्। एवं धर्माधर्मादिकरणत्वादिकमपि लक्षणं निरसनीयं, स त्रिधा सात्त्विकोराजसस्तामसश्चेति, तत्र तत्तद्गुणोन्मेषवशादंशभेदात्तत्तद्व्यपदेशः, इन्द्रियाव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणमहङ्कारः। अत्रापि पूर्ववदभिमानोऽहङ्कार इति सांख्यलक्षणं दूषणीयं, स चानात्मनि देहेऽहंभावकरणहेतुत्वमात्रादहङ्कारशब्दवाच्यः न त्वहमर्थत्त्वात्प्रतीच आत्मन एव तत्त्वान्न चैवं त्याज्यत्त्ववचनविरोधः। अहङ्कारस्योत्कृष्टजनावमानहेतोर्गर्वापरपर्य्यायस्याभिमानस्य तथोक्तेः। सोऽपि पूर्ववत्त्रिविधः। तत्र सात्त्विकादिन्द्रियाणि तामसाच्छब्दतन्मात्रं, राजस उभयानुग्राहकः। राजसतामसयोरपीन्द्रियाव्यवहितपूर्वभावित्वमात्रं सिद्धमिति नाव्याप्तिः। त्रयाणाम्प्रत्येकंप्रत्येकलक्षणमपि यथास्वं कार्य्यकारणप्रकाराः। यत्तूक्तं भोजराजेन।

स्यात्त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम् ।
सम्भेदादस्य सतो विषयो व्यवहार्य्यतामेति ॥
सात्त्विकराजसतामसभेदात्सञ्जायते पुनस्त्रेधा ।
स च तैजसवैकारिकभूतादिकनामभिः समुच्छ्वसिति ॥
तैजसतस्तत्र मनोवैकारिकतो भवन्ति चाक्षाणि ।
भूतादेस्तन्मात्राख्येषां सर्गोऽयमेतस्मात् ॥

इति. विरुद्धांशो बाह्यशैवागममूलत्वेनानादरणीयः । एवम्भगवत्पराशराद्युक्तप्रमाणतमपुराणाद्यानुगुण्येन पुराणान्तरादिवचनादीनि निर्वाह्याणि, अत्यन्तविरुद्धानि त्वनादेयानि । प्राणाद्यन्यत्वे सति हृत्कण्ठचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमिन्द्रियम् अशरीरं प्राणधार्य्यमेव यद् द्रव्यं पुरुषोपकारकं तदिन्द्रियमिति वरदविष्णुमिश्रैरुक्तं सात्त्विकाऽहङ्कारोपादानकमिन्द्रियमित्यन्ये: सादिलक्षणमप्राकृतेन्द्रियाव्याप्तेरयुक्तं शरीरसंयोगे सत्येव साक्षात्कारसाधनमप्रत्यक्षं साक्षात्कारसाधनमित्यादिवैशेषिकाद्युक्तं तु कर्मेन्द्रियाव्याप्त्यादेरनुपपन्नं, वक्ष्यते च वागदीनामिन्द्रियत्वं द्विधेन्द्रियं प्राकृतमप्राकृतमिति शुद्धाशुद्धसत्त्वयोगादेस्तद्भेदा अव्यक्तमहदहङ्कारेष्वपि प्राकृताप्राकृतविभागोऽस्तीति केचिदाचार्य्याः शब्दतन्मात्रसहभवत्वसात्त्विकाहङ्कारोपादानद्रव्यत्वादिप्राकृतेन्द्रियलक्षणं, पुनश्चेन्द्रियं द्विविधं ज्ञानेन्द्रियं कर्मेन्द्रियमिति. ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियं तत्षोढा मनःश्रोत्रादिभेदात्. उक्तश्चैवं विभागस्तत्त्वरत्नाकरे भट्टपराशरपादैः । तच्च षोढेत्युपक्रम्य आन्तरं मन इत्यन्तेन मनःपूर्वकत्वात् सर्वप्रवृत्तीनां मनःकर्मेन्द्रियमिति सांख्यादयः । यथाहुः ।

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि ।
वाक्पाणिपादपायूपस्थं कर्मेन्द्रियं ह्याहुः ॥
उभयात्मकमत्र मन इति ।

तदसत् तस्य च ज्ञानद्वारैव कर्महेतुत्वात् तावता च तथात्वे चक्षुरादावपि प्रसङ्गात् क्वचित् कर्मेन्द्रियत्वव्यवहारस्त्वौपचारिकः मानसवाचिककायिककर्मविभागस्तु कर्मशब्दस्य शुभाशुभसङ्कल्पादिरूपज्ञानेऽपि प्रयोगात्, अतः षडपि ज्ञानेन्द्रियाणि, तत्र प्राकृतविभागं प्रत्युच्यते अशुद्धसत्त्वे सति पञ्चविषयसाधारणेन्द्रियत्वं स्मृतिकरणेन्द्रियत्वमित्यादि प्राकृतमनोलक्षणं, तच्च हृत्प्रदेशमात्राधिष्ठानम् इन्द्रियान्तराणामपि हृत्प्रदेश एव कन्दस्थानं, स्थानान्तरेष्वपि यथासम्भवं वृत्तिः, आत्मनोऽपि तत्र भूयसा वृत्तिः, तथा च भाष्यं सर्वेन्द्रियकन्दभूतस्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानमिति मन एकमेवान्तःकरणं सङ्कल्पाध्यवसायादयस्तद्व्यापारभेदादेव ज्ञायन्त इति नान्तःकरणवैविध्यं, तथा च भाष्यम् अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति, उदाहृतञ्चै तत् प्राणे सूत्रकारैः पञ्चवृत्तिर्मनोवद् व्यपदिश्यत इति, अतोऽन्तःकरणं त्रिविधमित्यादिवादिनः सांख्यादयो निरस्ताः । शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रियं प्राकृतश्रोत्रं तन्मनुष्यादीनां कर्णशष्कल्यवच्छिन्नवृत्ति द्विजिह्वानां नयनवृत्ति तदुक्तं न्यायतत्त्वे करणपादाष्टमाधिकरणे चक्षुषा श्रवणं सर्पाणामिति नियम्यत इत्यादि, यत्तूक्तं तत्त्वरत्नाकरे कर्णशष्कुलीशरीरनयनगोलकरसनानासिकाधिष्ठानानि च तानीति तत्प्रायिकं मन्तव्यम् एतस्य नाभसत्वदिगुपादानत्ववादानामनन्यथासिद्धाहङ्कारिकत्ववच-

नवलादाप्यायितत्त्वादिभिर्निर्वाहः। यत्तु करणपादपञ्चमाधिकरणे नेत्रश्रोत्रादिशक्तीनामालोकशब्दाद्यात्मकत्वमुक्तं यच्च तथैव सप्तमाधिकरणे अन्नस्यातिसूक्ष्मपरिणाममिन्द्रियमित्यादिना कर्मेन्द्रियाणामप्यन्नपरिणामित्वादित्यादिना चेन्द्रियाणां भौतिकत्वं प्रतीतं तदप्यखिलमाप्यायनाभिप्रायेण निर्वाह्यं, तथैव हि स्मृतिवचनमपि वेदार्थसंग्रहे निर्व्यूढं, यथा वैकारिकाहङ्कारादेकादशेन्द्रियाणि जायन्त इति हि वैदिका इत्युपक्रम्य एवमाहङ्कारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं महाभारत उच्यत इति श्रोत्रं भौतिकं बाह्येन्द्रियत्वात्, आकाश इन्द्रियारम्भकः भूतत्वात्, शब्दः स्वसमानजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्, श्रोत्रं स्वग्राह्यगुणसजातीयगुणवत् बहिरिन्द्रियत्वात् इत्यादीनां चक्षुराद्यभौतिकत्वस्य वक्ष्यमाणत्वात् साध्यविकलत्वश्रुतिबाधादिदूषणानि वाच्यानि।

शब्दस्य भूतधर्मत्वात् श्रुतेर्वैकारिकत्वतः।
संयुक्तनिलयायोग्यः स* तया संप्रतीयते॥

शब्दस्य द्रव्याद्रव्यत्वश्रोत्रगमनशब्दागमनादिविवादमद्रव्ये शमयिष्यामः, त्वगादीनामपीन्द्रियाणां पूर्वोक्तश्रोत्रलक्षणे शब्दमात्रपदस्थाने क्रमात् स्पर्शमात्रपदन्यासेन लक्षणमूह्यं, तत्र त्वगाश्रयः कृत्स्नं वपुः, प्रदेशभेदेन स्पर्शोपलम्भतारतम्यं नखदन्तकेशादिषु स्पर्शानुपलम्भश्च प्राणमान्द्यतारतम्यादिति करणपादाष्टमाधिकरणे प्रोक्तं, यथायोग्यं वाय्वादिचतुष्टयं संयोगेन तया गृह्यते, स्पर्शादयस्तु संयुक्तनिष्ठतया चक्षुरादीनामाश्रया नयनगोलकतालुना-

* स तया संप्रतीयते इत्युचितं प्रतिभाति।

† वक्ष्यमाणरीत्या पदसाधुत्वमवधेयम्।

साः तत्र गजानां नासा हस्त इति पाणि*घ्राणयोरेकमेवा-
वाधिष्ठानमुच्यते तत्रोक्तं हस्तेन गन्धोपलब्धिर्गजानामेवे-
त्यादि जङ्गमशरीरेष्वेव प्रायशोऽयमिन्द्रियप्रदेशनियमः
चक्षुषा वायुव्यतिरिक्तभूतचतुष्टयं तथैव गृह्यते रूपादयो-
ऽपि स्पर्शादिवत्, दूरस्थग्रहणे तु चाक्षुषमहःप्रसरणात्
संबन्धसिद्धिः, तच्च करणपादद्वितीयाधिकरणे प्रपञ्चितं
प्रतिबिम्बग्रहणे तु स्वच्छद्रव्यप्रतिहतस्य नयनमहसः प्र-
तिस्रोतःप्रसरादिमूलकत्वं भ्रान्त्यधिकरणपूर्वपक्षेऽभिहितं,
स्फटिकादौ दर्शनवशान्नयनादिप्रभामात्रप्रवेशयोग्यं संस्था-
नमिति सर्वेषां तद्व्यवहितोपलम्भः, अञ्जनादिसंस्कृतनयन-
प्रभायाः पृथिव्यादावनुप्रवेशात्तदक्तचक्षुषां निधिप्रभृतेरु-
पलम्भः, जिह्वाघ्राणाभ्यां† तु रसगन्धौ क्रमात्संयुक्तनिष्ठ-
तया गृह्येते, उक्तं चेदं संबन्धद्वैविध्यं तत्त्वरत्नाकरे ।

तत्र वृद्धा विदामासुः संयोगं सन्निकर्षणम् ।
संयुक्ताश्रयणं चेति यथासम्भवमूह्यताम् ॥

इति, । तदेवं मनःस्पर्शनलोचनानि द्रव्याद्रव्यग्राह-
काणि श्रोत्रजिह्वाघ्राणान्यद्रव्यग्राहकाणि सर्वेषामपीन्द्रि-
याणां तत्तत्कालादिविशिष्टवस्तुग्राहकत्वात् द्रव्याद्रव्य-
ग्राहकत्वमेव वा, उक्तं च प्रमेयसंग्रहे श्रीविष्णुचित्तार्यैः
सन्मात्रप्रत्यक्षनिराकरणप्रसङ्गेन कालस्य वस्तुधर्मतया
सर्वप्रतीत्यन्तर्भावात् न पृथग्रूपत्वमिति । यत्तु वैशेषि-
कादिभिरुच्यते त्वगादीनीन्द्रियाणि क्रमाद्वाय्वाद्यात्मका-
नि स्पर्शादिषु मध्ये स्पर्शरूपरसगन्धमात्राभिव्यञ्जकत्वात्
स्वेदशैत्याभिव्यञ्जकपवनवत् दीपप्रभावत् दन्तान्तर्गत-

* पाणिसहिते घ्राणे इति पाणिघ्राणे इति विग्रहीतव्यं घ्राणपदे नासारन्ध्रो-
पाधिनिबन्धनं द्विवचनम् ।

† अत्र प्राण्यङ्गतया प्राप्तः पुंवद्भावः कुतोनजात इति समगंसिषि स्थानान्तरे ।

तोयवत् कुङ्कुमगन्धाभिव्यञ्जकघृतवदिति तत्र व्यञ्जकत्वं नाम व्यक्तिं प्रति करणत्वं तदनुग्राहकत्वं वा सामान्येन हेतुत्वमात्रं वा इन्द्रियत्वं वा, न प्रथमद्वितीयौ, स्वेतरहेतुवर्गप्रनियोगिकस्य साधकतमत्वादेवैवंविधत्वेन, साधनवैकल्यासिद्धिप्रसङ्गात्, न तृतीयः, इन्द्रियाधिष्ठानतत्संस्कारादिभिरनैकान्तिकत्वात्, न तुरीयः, साधनवैकल्यात् सर्वेषां चागमबाधः स एव, धर्मिग्राहकबाधोऽपि आगमान्तरेण गोलकातिरिक्तेन्द्रियासिद्धेः, किञ्चित्करणपूर्वकेत्येनावतापि करणमात्रं हि सिध्येत् नातिरिक्तं, गोलकादेरवैकल्येऽपि कार्य्यवैकल्यादतिरिक्तं कल्प्यत इति चेन्न सूक्ष्मस्य वैकल्यस्य मूषिकाघ्रातबीजवद् दुर्दृशत्वात् परिमलादिप्रसर इव पार्थिवगोलकावयवविशेषप्रसरवशादेव विषयसंबन्धसिद्धेः प्राप्यकारित्वाविरोधाच्च। अतोऽन्वयव्यतिरेकसिद्धस्यागमसिद्धस्य वा पक्षीकारे ग्राहकप्रमाणबाधोऽवर्जनीयः।

यत्त्वालोकाभावे जायमानोरूपसाक्षात्कारः तेजः*करणकः रूपसाक्षात्कारत्वात् सत्यालोके जायमानरूपसाक्षात्कारवदिति चक्षुषस्तैजसत्वमिति, तदपि न आप्यायकतेजसा सिद्धसाधनत्वात् तेजसस्तत्र कारणत्वेऽपि तच्चक्षुरेवेति नियामकाभावात् इन्द्रियवदेवानुद्भूतरूपस्पर्शस्य कस्यचिद्बाह्यतेजसोपि ग्रीष्मोष्मवत् सम्भवात्, उद्भूतरूपस्यापि साधने भवदभिमतेन्द्रियस्यापि तथात्वप्रसङ्गेन तमस एवासिद्धिप्रसङ्गात्, ईश्वरज्ञानेन चानैकान्त्यात्, अनित्यत्वेन विशेषणेऽपि स्वाश्रयोगिसाक्षात्कारैरनैकान्त्यात्, सर्वव्यभिचारस्थलव्यतिरिक्तत्वे सतीति विशेषणे तर्ककौशलम्, एवमनुमानान्तरेऽपि यथासम्भवं दूषणमू-

* अत्रापि तेजस्करणक इत्यपेक्षितम्।

ह्यम् । अप्राकृतश्रोत्रादिषु तु मुक्तेश्वरादीनां करणाधीनज्ञानप्रसराभावेऽपि स्वेच्छया परिग्रहवशाद्विषयसहकारिनियमे न निर्बन्धः तत्तदधिष्ठानविशेषादिभिस्तल्लक्षणम् ।

बौद्धाः*स्तु बुद्धश्चक्षुषैव सर्वं जानातीति वदन्ति तदयुक्तं तादृशभवदभिमतसार्वज्ञ्ये प्रमाणाभावात्, चक्षुःप्रकर्षतारतम्यं क्वचिद्विश्रान्तं प्रकर्षतारतम्यत्वादित्यादेरपि चक्षुर्ग्राह्यवर्ग एव सर्वातिशायित्वसम्भावनया तदतिलङ्घनेन रसादिविषयवित्त्ययोगादिति ।

अथ कर्मेन्द्रियम् । उच्चारणादिष्वन्यतमक्रियाहेतुत्वं तल्लक्षणं तत्पञ्चधा वागादिभेदात् वर्णोच्चारणकरणमिन्द्रियं वाक्, तच्च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवृत्ति, शुकादिव्यतिरिक्तविहगादीनां तत्तदष्टसंस्थानादिसहकारिविरहाद्वर्णोच्चारणाशक्तिः शुकादीनामपि किञ्चित् तद्वैषम्यादुच्चारणवैषम्यं, शिल्पकरणमिन्द्रियं पाणिः, स च मनुष्यादीनामङ्गुल्यादिवृत्तिः, वारणादीनां नासावृत्तिः । ननु

* वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिक-भेदभिन्ना बुद्धशिष्या बौद्धाश्चत्वारो बहुधा गण्यन्तेऽवान्तरविशेषानविगणय्य । शिष्यैर्हि योगश्चाचारश्चेति द्वयं करणीयमिति तेषां शैली. तत्राप्राप्तार्थस्य प्राप्तये पर्यनुयोगो योगः, गुरूक्तार्थस्याङ्गीकरणमाचारः, ततश्च गुरूक्तार्थस्य शून्यतत्त्वस्याङ्गीकरणादुत्तमाः, यथाश्रुतप्रतिपत्तृत्वेन पर्यनुयोगस्याकरणादधमाश्च ये शिष्यास्ते उत्तमाधमभावेन मध्यमतामवाप्ता बुद्धेन माध्यमिका इत्यभाणिषत । ते च सर्वशून्यत्ववादिनः । ये च बुद्धोक्ते सर्वशून्यत्वे बाह्यार्थशून्यतामवधृत्यापि कथमान्तरस्य ज्ञानस्यापि शून्यत्वमिति पर्यनुयोगमकुर्वंस्ते पर्यनुयोगाचाराङ्गीकाराद् बुद्धेन योगाचारा अमानिषत । ये त्वस्मिन्नेवावसरे प्रथमतः किमपि नापृच्छन् किन्तूपदेशसूत्रस्यान्ते तर्कमकुर्वंस्ते बुद्धेन गुरुणा सूत्रान्ते प्रश्नकर्तृत्वात् सौत्रान्तिका इत्यगादिषत । ते बाह्यान्तरपदार्थानां सत्यत्वमभ्युपगम्यापि क्षणिकतामातिष्ठन्ते । बाह्यार्थानां प्रत्यक्षतामपलप्यानुमेयतां च वदन्ति । ये तु माध्यमिकान् प्रति सर्वशून्यत्वं, योगाचारान् प्रति च बाह्यार्थशून्यत्वमुपदिष्टं, सौत्रान्तिकान् प्रति तु बाह्याभ्यन्तरतत्त्वसत्त्वमित्यादिविरुद्धं बहूपदिष्टं गुरुणा बुद्धेनेत्येवमसूयामाविष्कुर्वन्तो बुद्धं बहु विरुद्धं भाषसे इत्येवमभाषिषत शिष्यास्तांस्तु नाहमेतादृशो भवन्त एव विविधविरुद्धार्थज्ञातार इति वैभाषिका इति समबूबुधद्बुद्ध इति ते वैभाषिकख्यातिमलप्सतेति नामनिरुक्तिश्चतुर्णाम् ।

तालुपादादिभिरपि अभ्यासपाटवान्मौक्तिकग्रथनलिपिकरणादिशिल्पदर्शनात्तत्रापि तद्वृत्तिरास्थेया सत्यं मात्रया वृत्तिरस्त्येव विरोधाभावाद्देशभेदेन इन्द्रियान्तरव्याप्ते देशेऽवस्थानादेश्चक्षुः स्पर्शनादौ दर्शनादिति। संचरणकरणमिन्द्रियं पादः, स च मनुष्यादीनां चरणादिवृत्तिः, भुजगपन्नगादीनां तूरःपक्षादिवृत्तिः, तदुक्तं करणपादाष्टमाधिकरणे सर्पाः पादात् कर्मेन्द्रियादृते वक्षसा गच्छन्ति, तेषां गतिशक्तिरुरसि तस्मादुरगास्ते पन्नगाश्चेति पादास्कर्मेन्द्रियादित्यवयवविशेषलक्षणः सर्वेषामपि जन्तूनामेकादशेन्द्रियवत्त्वेन साक्षादिन्द्रियनिषेधायोगात्, तस्य च तत्तत्संस्थानादिसहकारेण स्थलजलगगनादिसंचारहेतुता, विहगादिपरकायप्रवेशे अन्वयव्यतिरेकदर्शनात्, मलादित्यागकरणमिन्द्रियं पायुः, स च तत्तदवयववृत्तिः, विहङ्गविशेषादीनां तु मुखादिवृत्तिः, तथोक्तं तत्रैवाष्टमाधिकरणे यथा वा मान्धालादीनामास्येन विण्मूत्रविसर्ग इति, आनन्दविशेषकरणमिन्द्रियमुपस्थः, स च मेहनादिवृत्तिः। ये तु कर्मेन्द्रियाणि नाभ्युपगच्छन्ति तैर्ज्ञानेन्द्रियाणि नाभ्युपेयानि तर्कागमयोरुभयत्राविशेषात्, चक्षुर्गोलकादाविव दृष्टवैकल्येऽपि पादादौ संचारादेः क्वचित् सूक्ष्मदोषविशेषेण प्रतिबन्धादिति। एतेषां संख्यानिर्णयाधिकरणोपसंहारे भाष्यम् इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसंख्या स्थिता, अधिकसंख्यावादा मनोवृत्तिभेदाभिप्रायाः, न्यूनव्यपदेशास्तु तत्रतत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ता इति, अणुत्वं चैषामुपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमात्रमेव, अणवश्चेति सूत्रोक्तमिति भाष्ये व्यक्तम्। एते सर्व एव समाः सर्व एवानन्ताः इति श्रुतिस्तूपकरणत्वसाम्यम् अथ यो ह्येताननन्तानुपास्त इत्युपास्यतया विहितप्राण-

विशेषणभूतकार्य्यबाहुल्यं चाभिप्रैति । अत एव तेषां परिच्छेन्नविचित्रपरिमाणत्वं स्थितं विकारशीलत्वाच्च मशकमातङ्गादिनानादेहेषु विचित्रपरिणामत्वं कालभेदेन परिणामभेदा विरोधं ज्ञाने समर्थयिष्यामः । सर्वेषां चैषां स्वाधिष्ठानदोषादिरेव दोषः सुषुप्त्याद्यवस्थास्वेव स्थावराद्यवस्थास्वदृष्टादिवशात् तत्तद्वृत्तिनिरोधतारतम्यं प्रबलादृष्टसहकारात् गन्धर्वयोगिप्रभृतीन्द्रियाणामतिसूक्ष्मव्यवहितविषयता उत्पत्तेरारभ्यादृष्टवशात् प्रतिपुरुषनियतानामपि तेषां जीवत्परकायप्रवेशे विशिष्टादृष्टान्तरवशात् कायवदेव परोपकारकत्वं स्वेन्द्रियैः सह सर्वत्र प्रवेशात्तेषामेव वा तत्राप्युपकारकत्वं मृतकायप्रवेशे हि स्वेन्द्रियैरेव तथा जीवत्कायप्रवेशेऽपि स एव समाधिरुचितः । स्मृतिश्च ।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥

इति, मृतकायस्य च परकायव्यवहार उपचारात्, परकायारम्भकशरीरैकदेशैरस्थ्यादिभिः प्रविष्टस्य कायलक्षणसंघात आरभ्यते, तदा च स्वशरीरं मृतमेव मृतकायप्रवेशवत् पुनः प्रवेशः, अनेकशरीराधिष्ठानशक्तानां तु यथेष्टम्, शरीरविनाशे चेन्द्रियाण्याप्यायकैर्मात्रया हीयन्ते शरीरान्तरे पुनरापूर्यन्ते मुक्तपरित्यक्तान्यन्यपरिगृहीतान्यपरिगृहीतानि वा यावत्प्रलयमवतिष्ठन्त इत्यादिकं द्रष्टव्यम् । ननु कर्मेन्द्रियाणां शरीरेण सहोत्पत्तिविनाशौ न पुनःशरीरान्तरगमनमस्ति, तथा हि सारे ऽभिहितम् हस्तादयोऽपीन्द्रियाणि जीवे देहान्तरमास्थिते उपकारकत्वाविशेषादिति, एवं भाष्येऽप्युक्तम्, न सप्तैवेन्द्रियाणि अपि त्वेकादश हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपक-

रणत्वात् कार्य्यभेदाच्च, दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्य्यभेद आदानादिरिति। न्यूनत्वव्यपदेशास्तु तत्रतत्रविवक्षितगमनादिकार्य्यविशेषप्रयुक्ता इति च, दीपे तु व्यक्तमेवोक्तं तत्र श्रोत्रादीनि जीवेन सह शरीरान्तरगमनेऽपि गच्छन्ति वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारकाणि इत्यादि, अतो यादवप्रकाशवत् कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशौ भाष्यकाराभिमतौ। नैतदेवम्, प्राणगतेश्चेति सूत्रे तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति इत्यादिश्रुतेरुदाहृतत्वात्। सप्तगतेरित्यधिकरणे यानि त्वितराणि विषयाणां ग्राहकत्वेन तेषामौपचारिकः प्राणव्यपदेश इति पूर्वपक्षं कृत्वा हस्तादयस्तु स्थितेऽतो नैवमिति तेषामपि प्राणत्वसमर्थनाच्च प्राणगतेश्चेत्यस्यैव समनन्तरे अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वादिति सूत्रे भाष्यं—यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वायुं प्राणश्चक्षुरादित्यमित्यादिना प्राणानां जीवमरणकाले अग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न भाक्तत्वादग्न्यादिष्वप्ययश्रवणस्येत्यादिकम्, अतः कर्मेन्द्रियस्य वाचोऽत्र गतिरभ्युपेतेत्युपलभ्यते तदन्येषामपि सममेव, सारेऽप्युक्तम् सप्तानां गतिश्रवणं विशेषणं च तेषां प्राधान्यादिति, दीपेऽपि सप्तानामेव गतिश्रवणं योगकाले विशेषणं च ज्ञानेन्द्रियाणां मनसः तत्प्रवृत्तिरूपबुद्धेश्च प्राधान्यादित्यादि, न चाहङ्कारिकेन्द्रियवादिनः प्रतिशरीरमिन्द्रियोत्पत्तिविनाशाभ्युपगम उपपद्यते पाण्याद्यधिष्ठानानि तु नेन्द्रियाणीति तदुत्पत्तिलयोपपत्तिः कथं तर्हि श्रोत्रादीनीत्यादेर्निर्वाहः, इत्थं परमतवत् प्रति शरीरमुत्पत्तिविनाशाभ्युपगमेऽपि ते-

षामिन्द्रियत्वं सिद्ध्यतीति कृत्वा हस्तादयस्तु स्थितेऽतो नैवमिति सूत्रस्य योजनान्तराभिप्रायेणैवमुक्तम्। अत एकादशेन्द्रियाण्यपि शरीरान्तरेष्वप्यनुवर्तन्त इति भाष्यकाराभिप्रेतमिति प्रतीमः। एवमेषामेवैतावतामेवैवंस्वभावानामेवागमेनैव सिद्धत्वात्सौगतवैभाषिकचार्वाकप्रभृतीनां स्त्रीन्द्रियपुरुषेन्द्रियादिकल्पनं कर्मेन्द्रियपरित्यागः, एकेन्द्रियवादः, तत्रापि त्वगिन्द्रियैकत्वस्वीकारः, शरीरस्यैवेन्द्रियत्वं कर्मेन्द्रियाणां शरीरोत्पत्तिविनाशयोरुत्पत्तिविनाशौ, मनोविभुत्वनित्यत्वतैजसत्वनिर्मनस्कत्वादीनि, राजसाहङ्कारजन्यत्वभौतिकत्वादीन्यन्यान्यपि प्रलपितान्यनादरणीयानि। युक्तिबाधादयश्च यथासंभवमुन्नेया इति।

अथ तन्मात्रादिसृष्टिः। भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रं, दधिरूपेण परिणममानस्य पयसो मध्यमावस्थावद् भूतरूपेण परिणममानस्य द्रव्यस्य ततः पूर्वा काचिदवस्था तन्मात्रा, तद्विशिष्टमपि द्रव्यं तन्मात्रमित्युच्यते तदेव च भूतोपादानमिति न शब्दादिगुणमात्राद्भूतसृष्टिः विशिष्टशब्दादिविषयाधिकरणं भूतं तत्रापि प्राकृताप्राकृतविवेकः पूर्ववत्, तन्मात्राणि च भूतानि च प्रत्येकं पञ्चधा शब्दतन्मात्राकाशादिभेदात् तत्र तामसाहङ्काराकाशयोर्मध्यमावस्थाविशिष्टं द्रव्यं शब्दतन्मात्रम्, एवमुत्तरोत्तरतन्मात्रेष्वपि तत्तद्भूतद्वयमध्यमावस्थाविशिष्टत्वम् अविशिष्टतत्तद्गुणाश्रयत्वं तत्तद्भूतोपादानत्वं च लक्षणमूह्यम्।

सांख्यास्तु पञ्चापि तन्मात्राणि साक्षात्तामसाहङ्कारोत्पन्नानि तत्र शब्दतन्मात्रमाकाशारम्भकम् इतराणि तु तन्मात्राणि पूर्वपूर्वतन्मात्रसहकृतान्युत्तरोत्तरभूतारम्भ-

एवं वरदनारायणभट्टारकपक्षेऽपि न चोद्यावकाशः, ज्ञाने द्रव्यशब्दस्यौपचारिकत्वात् अयमेव गुणः केषांचिद्विवक्षान्तरेण जातिगुणक्रियाद्रव्यरूपेणापि हि विकल्प्यते यथा अनेकेषां धर्मिणामन्तरङ्गोधर्मविशेषो जातिः यन्निरूपिते वस्तुनि प्रायशोविशेषाकाङ्क्षाशान्तिः सोऽन्तरङ्गः तदनुप्राणितस्य तस्य विशेषकः सिद्धो गुणः तथाविधं साध्यं क्रिया एतैर्विशिष्टं द्रव्यमिति एवमेव हि जातिगुणक्रियाद्रव्यवाचित्वं शब्दानाम् अत्रावान्तरगुणशब्दः कथासामान्यविशेषयोर्वादशब्दवत् अत्र चैकमेव वस्तु द्विधा त्रिधा चतुर्धा वा विकल्पयितुं शक्यम्, यथा ज्ञानमेव च संयोगादिमत्तया द्रव्यं तदेवात्मनः प्रत्यक्तया निरूपितस्वरूपस्य विशेषकतया गुणः, जानात्यादिनिर्देशे क्रिया, एवमन्यत्रापि चिन्त्यं सत्त्वं द्रव्यमसत्त्वमद्रव्यमिति वदतां तु सर्वेषां गुणानां द्रव्यत्वं विवक्षितमित्यलं प्रसक्तानुप्रसक्त्या। पञ्चमे तु ब्रूमः बुद्धिर्द्रव्यं प्रसरणादिमत्त्वात् संप्रतिपन्नवत् अत्रैव साध्ये ज्ञानत्वादात्मवदित्यादि। वरदविष्णुमिश्रैस्त्वेवमुक्तं ज्ञानं द्रव्यं संयोगादृष्टान्यत्वे सति भावनाकारणत्वादात्मवदिति, षष्ठस्य चतुर्थ एव दत्तमुत्तरम्। यदि तु स्वाश्रयत्यागोऽभिमतः स नेष्यते उक्तं ह्यत्रैव संवेद्य भगवद्यामुनमुनिभिः आत्मप्रहाणानभ्युपगमादविहायैवात्मानमितस्ततश्चेतनेन्द्रियादिद्वारा निःसरति विच्छिन्नायाश्च तस्याः सन्धानासम्भवः शास्त्र एवोक्त इति सप्तमस्याहिकुण्डलदृष्टान्तेन निरासः, न च तावता बहलविरलत्वादिप्रसङ्गः, भिदुरभागवत्स्वेव तथा व्याप्तेः, अस्तु वा बहलत्वादि तथाऽपि न तथा द्रष्टुं स्प्रष्टुं वा शक्यम् अतीन्द्रियत्वात् स्पर्शादिरहितत्वाच्च, न च विरलत्वे सरन्ध्रत्वनियमः सर्वदेशनिरन्तरसंयोगयोग्यस्वरूपत्वात् कथं

तदल्पदेशे पूर्णमिति चेत् स्पर्शशून्यत्वेनाप्रतिघातात्, उक्तं हि निरतिशयसूक्ष्मत्वं न्यायतत्त्वे एतेनैकस्य द्रव्यस्य कालभेदेऽपि नानापरिमाणत्वं नास्तीति वदन्तः प्रत्युक्ताः कालभेदस्यैव विरोध*शामकत्वात् अवयव्यभावाच्च, एवं तर्ह्यात्मनस्तद्देहानुरूपविविधपरिमाणवादिना दिगम्बरान् प्रति अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष इति सौत्रं चोद्यमत्रापि स्यादिति चेन्न तत्र केवलयुक्त्यादिमूलार्थप्रतिक्षेपे तात्पर्यात्, अष्टमस्योत्तरमात्मसिद्धौ तथा हि कथमतीतानागतयोरसतोश्चैतन्येन संप्रयोग इत्याशङ्क्य विषयविषयिभावप्रकाशमानत्वसंख्यादियोगदवीयोदेशवर्तिज्ञानशीघ्रसंयोगप्रतिबन्धिभिः परिहृतम्। तथा अतीततयाऽनागततयां च तावप्यद्यापि विद्येते इति तेन रूपेण बोधसन्निकर्षे नानुपपत्तिरिति च तद्द्रव्यसत्तया संयोगोपपत्तिरुपपादिता, तत्रैवमाशयः यथा कैश्चिदसतोरेव भूतभविष्यतोः सामान्यात्मनाद्यापि वृत्तेः प्राकट्याश्रयत्वमुपपादितं तथा तद्द्रव्यात्मनापि वृत्तेः संयोगोऽप्युपपन्न एव विशिष्टेनासंयोगश्चेद्विशेषाकारेण न प्राकट्यमिति तुल्यमिति, नवमस्य त्वनभ्युपगम उत्तरं, न हि गुणादिभिरपि संबन्धः संयोग एव किं तु संयोगिनिष्ठता यथा परेषां संयुक्तसमवायादिसंबन्धश्च संयोगलक्षण इत्यादिवचनानां संयोगावश्यम्भावे तात्पर्यम्। उक्तं च षडर्थसंग्रहे श्रीराममिश्रैः संयोगस्तदर्हेषु विषयत्वाकारः अनर्हेषु तत्तस्तदन्वयिष्विति, अस्यार्थः संयोगार्हवस्तुनि वर्तमानत्वादिविशिष्टद्रव्यप्रकाशनं संयोगः संयोगानर्हाणां तु रूपादीनां प्रकाशनं तदन्वयिषु आश्रयेषु कारणेषु कार्येषु च यथासम्भवं संयोग इति।

* शमधातोर्मित्त्वेन शमकत्वादित्युचितः पाठः।

यत्तु नैरन्तर्यपरपर्यायमत्यन्तसामीप्यमात्रं च संयोगः स एव परतन्त्राश्रितः समवायपदपरिभाषाभूमिवैशेषिकाणामपीति नार्थान्तरत्वमुररीकृत्य विकल्पः सम्भवतीत्यात्मसिद्धावुक्तं तदपि पराभ्युपगतसमवायानभ्युपगमात् स्वमते समवायस्य स्वरूपविशेषानतिरेकादतिरिक्तसम्बन्धाभावपरं न तु गुणगुणिनोः संयोगलक्षणसम्बन्धपरं गुणगुणिनौ संयुक्ताविति यदि केचित्प्रयुञ्जीरंस्तदानीमौपचारिकोऽयं व्यवहार इति ज्ञापयितुं नैरन्तर्यपरपर्यायमित्युक्तं निरन्तरत्वमात्रात् संयुक्तत्वव्यवहारः तावति वैशेषिका युक्त्याभासैरर्थान्तरत्वं पर्यभाषयन्तेत्युक्तं भवति अन्यथा गुणस्य संयोगवत्त्वे तस्यापि द्रव्यत्वं स्यात् द्रव्यलक्षणत्वात्तस्य अवस्थायोगित्वं द्रव्यलक्षणमस्त्विति वचनेऽपि गुणानां ज्ञानसंयोगलक्षणावस्थायोगित्वाद् द्रव्यत्वं दुष्परिहरं न च द्रव्याद्रव्यविभागो माभूदिति वाच्यं भाष्यकारैरेव सत्त्वरजस्तमसामद्रव्यत्वसमर्थनात् अतो यथोक्त एवार्थः । यद्वा नैरन्तर्यमात्रमङ्गीकृत्य संयोगमपि केचिन्नेच्छन्ति तन्मतेनोक्तमिति मन्तव्यं, दशमस्य नायनं तेजोनिदर्शनं योग्यतान्न नियामिकेति चेन्न अत्रापि तुल्यत्वात्, ज्ञानसंयोगे सति काऽपरा योग्यतेति चेत् इन्द्रियसंयोगे सति काऽपरेत्यपि सुवचत्वात् ज्ञानायोग्यत्वे तस्य वस्तुनः केनचिदपि ज्ञानेनाप्रकाश्यत्वं स्यादिति चेन्न ज्ञापकायोग्यत्वेऽपि तुल्यत्वात् स्वभावादेव किञ्चित् ज्ञापकं क्वचिदेव शक्तमिति चेत् तर्हि तत्रैव ज्ञानमिति, अस्तु तर्हि सामग्रीस्वभावादेव ज्ञानस्य प्रतिविषयं प्रतिनियमः किं सम्बन्धेनाधिकेनेति चेन्न ईश्वरज्ञानस्य नित्यस्य तदभावात् निर्विषयत्वेनाज्ञानत्वप्रसङ्गादीश्वराभावप्रसङ्गात् अनित्येषु ज्ञानेष्वयं नियम इति

चेत् सत्यं, तथापि संयुक्तसमवायाद्यविशेषेऽपि रसादिपरिहारेण रूपादौ वर्तमानस्य चक्षुरादेः स्वभावनियमे सत्यपि संयुक्तसमवायादिपरिग्रहवत् वक्तव्यम्। उक्तं च न्यायकुलिशे संयोगस्तु प्रसरणवैभवादिप्रतिपादकशास्त्रबलादाश्रित इति योग्यतामात्रेण रूपान्तरादीनामपि ग्रहणप्रसङ्गात्तत्परिहाराय सम्बन्धविशेषाङ्गीकार इति चेत् तर्हि तत्रापि योग्यतामात्रेण सर्वदा प्रकाशः स्यादिति तत्परिहाराय सम्बन्धपरिग्रहः सामग्र्येवात्रातिप्रसङ्गं निवारयेदिति चेन्न तत्रापि तुल्यत्वात्, सम्बन्धोऽपि तत्र सामग्रीनिविष्ट इति चेत् तत्रापि तस्य निवेशः किं न स्यात् तत्सम्बन्धसामग्र्यैव तन्नियमस्याप्युपपत्तेः, तत्रैव सम्बन्ध इत्यपि हि सामग्रीस्वभावादेव, एकादशे वेगातिशयः शक्तिविशेष ईश्वरसङ्कल्पो वा प्रतिवक्तारः इष्टं च विचित्रवेगित्वं नायनतापनादिमहसां तच्च काष्ठाप्राप्तं युगपच्चितुरत्वेन वा विश्वमास्कन्दत इति विश्वसिद्धि, द्वादशे तु स्वाभाविकं तदीयत्वं तदाश्रितत्वं चेति सञ्चारेऽपि न दोषः यथा व्यापकात्मवादिनः शरीरेन्द्रियादीनां यथैवेश्वरमनुमन्यमानस्य तदीशितव्यानां यथा वा लोके दासभृत्यादिद्वन्द्वानां, यथाच प्रभाप्रभावदादेः, यथाच वैशेषिकादीनां चलाचलत्वेऽप्ययुतसिद्धयोरवयवावयविनोः यथा चास्मत्पक्षे शरीरिणः पुरीतदादिसञ्चारेऽपि शरीराणामिति व्यपगतघनदुर्दिनोबोधभानुरौपनिषदानां बुद्धिरेवोपाधिभेदात्सुखदुःखेच्छाद्वेषप्रयत्नरूपा सुखादिजनकतयाऽभ्युपगतज्ञानातिरेके प्रमाणाभावात् इच्छामि द्वेष्मीत्यादिव्यवहारस्य करामीत्यादिवत् ज्ञानविशेषेणैवोपपत्तेः, वैषयिकसुखदुःखरूपत्वं ज्ञानस्य विषयाधीनमित्यनुकूलत्वप्रतिकूलत्वाविशेषाद्विषयस्यापि सुखदुःखशब्दवाच्यत्वमस्त्येव

प्रपञ्चितमिदं भूमाधिकरणे, तथा वेदार्थसंग्रहे विषयायत्तत्वात् ज्ञानस्य सुखरूपतया ब्रह्मैव सुखमित्युक्तं सुषुप्त्याद्यवस्थासु प्रयत्नो नास्त्येव अनुपलम्भात्, अदृष्टादिवशाच्च निश्वसितादिसिद्धिः परैरपि तत्रैव प्रयत्नकारणतया अदृष्टादिकमभ्युपगतं तन्निश्वासाद्यर्थमेव भवतु अतो मध्ये प्रयत्नकल्पकप्रमाणं स्पन्दत्वादिहेतुरन्यथासिद्धः। उक्तं च अन्तराभूतग्रामवदित्याद्यधिकरणे भाष्ये प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावादित्यादि, तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वादित्यादि च, कर्तृत्वाभावेऽपि कृतिविजातीयकल्पनं प्रयत्नकृतिशब्दपर्यायत्वप्रसिद्धिगौरवाभ्यां प्रतिहतम्।

नन्वात्मगुणाः सुखादयो माभूवन् मानेवृत्तिभेदास्तु भविष्यन्ति तथा चात्मसिद्धावुक्तं यत्तु सुखादिनिदर्शनेनात्मविशेषगुणतया चितेरागन्तुकत्वमुपपादितं तदपि गुणवृत्तापरिज्ञानेनैत्युपक्रम्य सुखदुःखे च नात्मधर्मौ इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात् व्याकरिष्यते चैनदन्तिमपादार्थसमर्थनावसर इति, साधनविकलता च निदर्शनस्य रागद्वेषादयोऽपि मनोऽवस्थाविशेषाः न साक्षादात्मगुणः विज्ञायते हि कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एवेति, गीयते च इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिरिति क्षेत्रलक्षणमिति गीतां चोदाहृत्य तदर्थं शरीरलक्षणं चोपपाद्य पुनः किमिदं धीरिति धीशब्दसहपाठमाशङ्क्य उत्प्रेक्षाभिप्रायं तत् न ज्ञप्तिविषयं, तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात्, श्रूयते हि न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इतीत्याद्युक्तं, तथा पञ्चवृत्तिर्मनोवद्व्यपदिश्यत इति सूत्रे यथा न कामादिकं मन-

सस्तत्त्वान्तरं कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा-धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एवेति वचनात् एवं प्राणोऽव्यनोऽपान उदानः समान इत्येतत्सर्वं प्राण एवेति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः न तत्त्वा-न्तरमित्यवगम्यत इति भाष्यं तत्कथं सुखादीनामात्म-गुणत्वम् अत्रोच्यते अश्रुतसिद्धान्तस्य पुस्तकनिरीक्षणा-दयं दोषः तथा हि आत्मसिद्धौ तावत् यत्तु सुखादिनि-दर्शनेनेत्यस्यानन्तरम्—

स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः ।
नैवं सुखादिबोधस्तु स्वरूपोपाधिरात्मनः ॥

यथा च बोधोपाधिरात्मस्वभावस्तथोपपादितमिति स्वाभाविकत्वास्वाभाविकत्वाभ्यां बोधमात्रस्य सुखादेश्च भेदमभिधाय सुखदुःखे च नात्मधर्मावित्यादि तु वैभवेन मतान्तरेण वाऽभिहितम् अन्यथा कथमेवमुपसंहारारम्भे ब्रूयात् तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेष-विशेषगोचर एव निश्चयसंशयादिव्यवहारभेदः तद्विशेष-भाजि चैतन्ये वेति आगन्तुकत्वे इन्द्रियोपाधिकत्वाद्यवि-शेषात्, न च तथोक्तमन्यथा चोक्तम् ।

नन्वश्रुतसिद्धान्तस्येति भवत एव दोषः न स्यात् न्यायतत्त्वशास्त्रप्रकरणं ह्यात्मसिद्धिः तत्र च शास्त्रे ज्ञान-निरूपणात्मकप्रथमपादषष्ठाधिकरणे सर्वं स्पष्टं सूत्रभाष्य-योश्चायं भावः तत्तदवस्थज्ञानजनकत्वावस्थाभेदभिन्नं मन-स्तैर्व्यपदिश्यत इति निर्व्यूढञ्च तुल्यन्यायमसप्तगतेरित्य-धिकरणे अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति, उक्तं च वेदार्थ संग्रहे दुःखज्ञानमलाधर्माः प्रकृतेस्ते न चात्मन इति,

अत्र प्रकृतिसंसर्गकृतकर्ममूलत्वान्नात्मस्वरूपप्रयुक्तधर्मा इत्यर्थः प्राप्ताप्राप्तविवेकेन प्रकृतेरेव धर्मा इत्युक्तमिति, तथा तत्रैव भक्तिशब्दश्च प्रीतिविशेषे वर्तते प्रीतिश्च ज्ञानविशेष एवेत्युक्त्वा ननु च सुखं प्रीतिरिति नार्थान्तरं सुखं च ज्ञानविशेषसाध्यं पदार्थान्तरमिति हि लौकिका इति चोद्यं कृत्वा नैवं येन ज्ञानविशेषेण तत्साध्यमित्युच्यते स एवज्ञानविशेषः सुखम् एतदुक्तं भवति विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि तानि च विषयाधीनविशेषाणि तथा भवन्ति येन विषयविशेषेण विशेषितञ्ज्ञानं सुखस्य जनकमित्यभिमतं तद्विषयज्ञानमेव सुखम्। तदतिरेकि पदार्थान्तरं नोपलभ्यते तेनैव सुखित्वव्यवहारोपपत्तेश्चेत्याद्युक्तम् इच्छा द्वेष इत्यादिभगवद्गीतावचनन्तु तत्रैव भाष्यकारैर्निर्व्यूढम् इच्छा द्वेषः सुखं दुःखमिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते यद्यपीच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि तथाऽप्यात्मनः क्षेत्रसम्बन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते तेषांपु रुषधर्मत्वं पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत इति वक्ष्यतीति, उक्तं च श्रीराममिश्रैः षडर्थसंक्षेपे वेद्यभेदधीभेदः सुखमन्यादृष्टेरित्यादि, उक्तं च श्रीवरदविष्णुमिश्रैरपि सुखदुःखे तावदनुकूलप्रतिकूलविषये ज्ञाने एवेति गुणेष्वन्तर्भाव एवेत्यादि, उक्तं च सङ्गतिमालायां श्रीविष्णुचित्तैः एवं परमात्मनः पावकप्रकाशौष्ण्यादिस्थानीयं जीवस्वरूपमपि सुषुप्तिसंहारयोः परमात्मनोभेदकसंशयनिर्णयविपर्यया यथा ज्ञानप्रत्यक्षानुमानागमरागद्वेषलोभमोहमदमात्सर्यधैर्यविचिकित्साश्रद्धालज्जाभयाद्यनन्तज्ञानप्रसरणरूपविकारभेदशून्यमित्यादि तत्सिद्धं सुखादयो बुद्धिविशेषा इति तर्हि नित्यसर्वविषयस्येश्वरज्ञानस्य कथ-

मिच्छाद्याकारत्वमिति चेत् उपाधिविशेषाद्वा अनित ज्ञानान्तरसद्भावाद्वा यथातथा वा भवतु अभ्युप: हीन्द्रियजन्मानित्यमपि ज्ञानमीश्वरस्यास्तीति वरदविप मिश्रादिभिः । यदुक्तमीश्वरज्ञानस्य सर्वविषयनित्यज्ञा गृहीतग्राहित्वादिति अस्यापीन्द्रियजत्वादिति च प्रज्ञा रित्राणे स्वयं सिद्धिप्रकरण एवमुक्तम् ।

सुखदुःखे च विज्ञानविशेषाविति केचन ।
तन्न साधुशरीरस्य पादादिषु हि ते भ्रमृ ॥
तत्रतत्रात्मनस्तस्यासन्निधानादणुत्वतः ।
तद्धर्मभूतविज्ञानस्यापि नैवास्ति सन्निधिः ॥

इत्युक्त्वा अनन्तरं जीवस्यबन्धमोक्षावस्थयोर्द्वं रप्यणुत्वमुपपाद्य ।

यावदाश्रयवर्त्येव विगीतं ज्ञानमुच्यते ।
धर्मत्वे सति धीत्वेन ब्रह्मविज्ञानवत्त्वतः ॥
गुणत्वमेव ज्ञानस्य न तु द्रव्यत्वसम्भवः ।
अतीतानागता अर्था अपि भान्ति च धीबलात्
संयोगमनपेक्ष्यैव सर्वत्राप्यर्थकृत्यकृत् ।
तस्माद्विषयविषयिभावः सम्बन्ध एव हि ॥
ज्ञानार्थयोस्तु सम्बन्धः सोऽखिलैरपि संविदः ।
स्वतः सर्वार्थसम्बन्धिन्येषा धीः सर्वगोच्यते ॥
अगत्वा सर्वसम्बन्धिसर्वग्राहि प्रचक्षते ।
स्वाश्रयायुक्तवस्तुष्वप्यस्याः कार्यकरत्वतः ॥
गुणवैरूप्यसद्भावाद् द्रव्यता भाष्यभाषिता ।
स्वाश्रयश्लिष्ट एवार्थे स्पर्शाद्याः कार्यकारिणः ।
दाहस्फोटादि कार्यं ते कुर्वते नेदृशी हि धीः ।

गुणवैरूप्यमेवास्या द्रव्यशब्देन लक्ष्यते ॥
भावान्तरं तदा प्राप्तं शक्तिवज्ज्ञानमप्यतः ।
द्रव्यत्वपक्षे ज्ञानस्य परिणामानिरूपणात् ॥
वैयर्थ्याच्च गुणा वा तद्भावान्तरमथापि वा ।
देहदेशोत्थमप्येतत्सुखं दुःखं च देहिनः ॥
आत्मनो धीमहिम्नैव भासेते ते तथातथा ।
अनात्मकशरीरे तददृष्टेरात्मनो गुणौ ॥
इति चेन्नाशरीरस्यासम्भवान्नात्मनो गुणौ ।
सकर्मकात्तु देहस्य गुणौ ते आत्मनो गुणात् ॥
ज्ञानाद्भात इति प्राज्ञैः परिकल्प्य इति स्थितिः ।
कर्मिणश्चेतनस्यानुभाव्यत्वेनैव सम्भवः ॥
तयोरिति प्रकाशेनाव्यभिचारोऽन्यथा वृथा ।
इच्छादयो न देहैकदेहवर्तिन इत्यतः ॥
आत्मनः स्युर्गुणा ज्ञानविशेषाश्च प्रकीर्तिताः ।
जलाधारेष्वनेकेषु भास्करस्योपलब्धिवत् ॥
अणोरप्यात्मनोऽनेकदेहेष्वस्तूपलम्भनम् ।
योगिनां शक्तिवैचित्र्यादीश्वरानुग्रहेण वा ॥
बहुदेहाः प्रवर्तन्त एकदेहवदञ्जसा ।
अन्तरालाग्रहात्तेषां स्वात्मनश्च स्वयेच्छया ॥
सन्निधानोपलब्धिः स्यात्तत्रतत्राहमित्यपि ।
प्रतिदेहं विविक्तानि मनःप्रभृतिकान्यपि ॥
इन्द्रियाणीश्वरेच्छाद्यैः प्रवर्तन्ते तु योगिनः ।
मुक्तश्चानेकदेहान् संगृह्णाति स्वेच्छयैव तु ॥
सर्वज्ञ एव कामान्नीकामरूप्यनुसञ्चरेत् ।
प्रदीपः प्रभयेवात्मा ज्ञानेनाखिलमाविशेत् ॥

इत्यादिव्यवहारश्च प्रकाशयत्वनिबन्धनः ।
अतीतानागता नार्थाः प्रभया भान्ति जातु चित् ॥
ते च ज्ञानेन भान्त्यातो न साम्यं सर्वथा मतम् ।
स्वरूपेणाणुरात्मायं गुणद्वारेण सर्वगः ॥
उभयव्यवहारोऽपि युज्यते प्रत्यगात्मनः ।
परमात्मा स्वरूपेणाप्यशेषव्यापकः श्रुतेः ॥
सर्वान्तर्याम्यनन्तश्च तथाऽतः सर्वगो मतः ।
अद्व्याप्त्यभावेन सुषुप्तौ नार्थभासनम् ॥
धियोऽधीमात्रमात्मा च तदा स्वैरं प्रकाशते ।
अस्वाप्सं सुखमेतावत्कालमित्युत्थितः पुमान् ॥
परामृशंस्तदाप्यात्मभासनं विविनक्ति हि ।
मामन्यं च न जानामीत्येवमादि निषेधधीः ॥
मानुष्यादिविशिष्टात्मपरागर्थैकगोचरा ।
अहंशब्दानुविद्धा धीः सुषुप्तौ नास्ति तत्र तु ॥
प्रत्यगर्थस्वरूपं तु भात्यर्थाग्राहिधीगुणम् ।

इत्यस्यानन्तरमहमर्थत्वमात्मनः प्रतिपाद्य ज्ञानस्यानुमेयत्वञ्च निरस्य पुनरपि सुखदुःखे प्रयुज्य ।

प्रतिकूलानुकूले तु दुःखमन्यच्च कर्मिणः ।
भोक्तुर्भातोऽनयोस्तेन प्रकाशाव्यभिचारिता ॥
प्रकाशव्यभिचारे तु तत्सत्तैव वृथा भवेत् ।
भोगार्थं तु तदुत्पत्तिर्भोगो न स्यादभासने ॥
इच्छाद्वेषप्रयत्नादिशब्दैर्धीरभिधीयते ।
अर्थभेदानुविद्धास्ते धीविशेषाः प्रकीर्तिताः ॥
न च देहैकदेशेषु प्रकाशन्ते सुखादिवत् ।
चिद्व्याप्तस्था न हीच्छा मे पाद इत्यस्ति धीर्नृणाम् ।
पादे दुःखं हस्तयोर्मे सुखमित्यादिकाऽस्ति धीः ॥

धर्मिभेदास्तत इच्छाद्याः सुखदुःखे तनोर्गुणौ ।

इत्युपसंहृतं. पाणिपादादिदेहैकदेशवर्तितयोपलम्भेन सुखदुःखयोर्देहैकधर्मत्वम्, इच्छादेस्तु तथाऽनुपलम्भेन ज्ञानविशेषत्वोपपत्तिः, ज्ञानस्य स्वाश्रयादन्यत्रावर्तमानत्वं संयोगमनपेक्ष्य विषयविषयिभावेन प्रकाशकत्वमद्रव्यत्वमित्याद्यर्था भाष्यादिविरुद्धाः परतन्त्रदन्तिदन्तादन्नितन्द्रालुनया परिगृहीताः । न्यायसुदर्शने तु तैरेव सुखदुःखयोरात्मधर्मत्वं चोक्तं. तथा हि भाष्ये मनुष्यादिपिण्डविशिष्टस्यात्मनः सुखित्ववचनं न विशेषणभूतशरीरस्यापि आत्ममात्रस्यैव सुखाश्रयत्वात्, किं तु शरीरे वर्तमानस्यैवात्मनो वैषयिकसुखादिमत्त्वमिति तद्विशिष्टात्मनस्तद्वत्त्वमयमात्मा सुखीत्यनेनापि प्रतीयत इत्यर्थः । एवमदृष्टमपीश्वरप्रीतिकोपात्मकमेव तद्विषयत्वप्रतिनियमादेव च क्षेत्रज्ञानां कर्मफलनियमोपपत्तिः शास्त्रगम्यत्वाचास्य तथात्वमवसीयते. तथा च द्रमिडाचार्यभाष्यं फलसम्बि*भत्सया कर्मभिरात्मानं पिप्रीषन्तीत्यादि भाष्यमपि शास्त्रैकसमधिगम्ये एवेत्यादि सूत्रकारैरेवैतद्विशदमुपपादितं फलमत उपपत्तेरित्यादिभिः । यत्तु शरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं तद्भोगसाधनत्वात् स्रगादिवदिति सिद्धे ज्ञानाद्यनुपपत्तेः परिशेषाज्जीवसमवेतादृष्टसिद्धिरिति वैशेषिकादिभिः स्वीक्रियते तदसत् अस्मदुक्तादृष्टादेव नियमोपपत्तौ विपक्षे बाधकाभावात्, न चान्यत्र भोगप्रसङ्गः नियामकस्येच्छादेरध्यक्तत्वात्, एवं च सति धर्माग्नीन्द्रादिदेवताप्रीत्यादेरपि श्रुतिसिद्धत्वेनैवादृष्टतया स्वीकारे न दोषः तेषामपि फलप्रदातृत्वमीश्वराधीनं स-

* फलसंम्बिभन्त्सयेति दूषितम् ।

र्वत्र साधारणमीश्वरप्रीत्यात्मकमदृष्टं तथा च स्वयमेवाह ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेति ।

ईश्वरज्ञानस्य कोपाद्यात्मकत्वं विविधकर्मोपाधिकं. न चैव दोषः स्वाज्ञापरिपालनानुरूपगुणत्वात् एवं सौशील्यवात्सल्यसौहार्दप्रभृतयोऽपि बुद्धिविशेषाः, भरतादिपठिताश्च रत्यादयः स्थायिभावास्तत्परिणामरूपाः सञ्चारिभावेषु च निर्वेदादयः स्वावमानादिरूपबुद्धिविशेषा एव ग्लान्यादयस्तु शरीराद्यवस्थाविशेषाः स्वप्नशब्दस्यापि स्वप्रदर्शनाभिप्रायत्वे बुद्धिविशेषविषयत्वं व्यक्तं सुषुप्त्यभिप्रायत्वेऽपि अमूर्च्छितस्य जीवतः समस्तज्ञानप्रसररहितावस्थाविषयत्वम् एवं जाड्यादिष्वपि चिन्त्यम् । निद्रा तर्हि कस्यावस्था चिन्तालस्यकश्मलादिभिः संमीलनो मनसो ज्ञानस्यैव वा, सैव च सुषुप्त्यादिकारणं, कथं तर्हि अभावप्रत्ययालम्बना वृत्तिर्निद्रेति पारमर्षं सूत्रम् इत्थं समाधिमधिगच्छतो वृत्त्यन्तरवन्निरोद्धव्यत्वाभिप्रायम् । निरोधपरत्वात्प्रकरणस्येत्ययमर्थ आत्मसिद्धावुक्तः । बुद्धेश्च निर्विषयत्वनिराश्रयत्वनिर्धर्मकत्वादिगोचरा दुरूहाः शून्यवादवदुपलम्भविरोधादिभिर्दूषणीयाः । असत्ख्यात्यात्मख्यात्यनिर्वचनीयख्यात्यादयश्च न्यायपरिशुद्धावस्माभिर्दूषिताः. तथा प्रमाणप्रमेयादिकं व्यवहारौपयिकमखिलमपि तत्रैव प्रपञ्चितमिति नेह प्रस्तूयते वैशेषिकशैलीमनुसृत्य यथावस्थितपदार्थस्वरूपं ह्यत्र विशोध्यत इति ।

माहाभाग्य*वशंवदीकृतयतिक्षोणीशवाणीशना
भूयाद्भोगसमेधकश्रुतिशिरःप्रासादमासेदुषी ।

* माहाभाग्य-शब्दे यकारद्वयं समुचितं भाति ।

नित्यानन्दविभूतिसन्निधिसदासामोददामोदर-
स्वैरालिङ्गनदौर्ललित्यललितोन्मेषा मनीषा मम ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायसिद्धाञ्जने बुद्धिपरिच्छेदः पञ्चमः ॥

श्रियै नमः । श्रीधराय नमः ।

श्रीमते रामानुजाय नमः

सन्तु शुभाशिषः पूर्वाचार्या लोकद्वयसर्वमङ्गलाय नः ॥



॥ श्रीः ॥

श्रियै नमः ।

श्रीधराय नमः ।

श्रीमते रामानुजाय नमः ।

## अथ न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदः षष्ठः ।

अथाद्रव्यम्, संयोगरहितमद्रव्यं, तत्र च त्रिगुणे सदृशविसदृशरूपोऽवस्थासन्तानः कालेऽपि क्षणलवनिमेषत्वादिपरार्द्धपर्यन्तः, बुद्धौ प्रत्यक्षत्वानुमितित्वश्रौतत्वादिरूपः, शुद्धसत्त्वेऽपि केचित् त्रिगुणसमा इत्यनन्तप्रकारो यथाप्रमाणमनुसन्धेयः, एतदपेक्षया च वरदविष्णुमिश्रैरुक्तम्–गुणाश्चानन्ता इति, तेषां चानन्तवैषम्यस्य विविच्य निर्देष्टुमशक्यत्वात्, शक्यांशस्य च द्रव्यनिरूपणेनैव निरूपितप्रायत्वात्, तथाऽतिरिक्तनिरूपणस्य च लोकव्यवहारादृष्टाद्युपयोगाभावादन्यानि स्फुटपरिगणनीयान्यद्रव्याणि निरूप्यन्ते–तानि सत्त्वरजस्तमांसि शब्दादयः पञ्च संयोगः शक्तिरिति दशैव, एवंविधेष्वेवाद्रव्येषु गुरुत्वद्रवत्वस्नेहसंस्कारसंख्यापरिमाणपृथक्त्वविभागपरत्वापरत्वकर्मसामान्यसादृश्यविशेषसमवायाभाववैशिष्ट्यादीनां यथासम्भवमन्तर्भावः। एष्वपि केषाञ्चिदनन्तर्भावः सयूथ्यसम्मतस्तत्रतत्र वक्ष्यते सयूथ्याङ्गीकृतैः कैश्चित्सहैकत्वादयस्तत्त्वमुक्ताकलापे अद्रव्यभेदा अस्माभिरुक्ताः, तत्र प्रकाशसुखलाघवादिनिदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यं सत्त्वम् । तद् द्विधा शुद्धमशुद्धं चेति, रजस्तमःशून्यद्रव्यवृत्ति सत्त्वं शुद्धसत्त्वं तन्नित्यविभूतौ, रजस्तमःसहवृत्ति सत्त्वमशुद्धसत्त्वं तत्त्रिगुणे सत्त्वलक्षण एव लोभप्रवृत्त्यादि-

निदानं प्रमादमोहादिनिदानमिति विशेषणविनिमयेन रजस्तमसोर्लक्षणे त्रीण्यपेतानि यावत्प्रकृतिव्याप्तान्यनित्यानि तानि प्रलयदशायामत्यन्तसमानि सृष्ट्यादौ विषमाणि क्रमात् सृष्टिस्थितिसंहारोपयुक्तानि ईश्वरसङ्कल्पादिसहकारिभेदात् परस्पराभिभवोद्भवसहकारित्वादिमन्त्येतानि तत्तददृष्टोपष्टब्धपुरुषभेदादुद्भवसमत्वादिभावात्, यथोक्तं भगवता पराशरेण वस्त्वेकमेवेत्यादि, तदेव प्रीतये भूत्वेत्यादि च, भगवद्गीतायां तद्भाष्ये चैतद्विशदमनुसंधेयं सात्त्विकराजसतामसकार्यगतिकर्माहारदानादिविभागोऽपि तत्रैव प्रपञ्चेन द्रष्टव्यः, एषां चाद्रव्यत्वं शारीरकभाष्ये व्यक्तं रचनाऽनुपपत्तेश्चेत्यादिसूत्रे चकारादन्वयस्यानैकान्त्यं समुच्चिनोतीत्युपक्रम्य यतः सत्त्वादयो द्रव्यधर्मा न तु द्रव्यस्वरूपं, सत्त्वादयो हि पृथिव्यादिगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव न तु मृद्धिरण्यादिवद् द्रव्यतया कार्यान्विता उपलभ्यन्ते गुणा इत्येव च सत्त्वादीनां प्रसिद्धिरिति, तथा दीपे च चकारात्सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासम्भवं समुच्चिनोति सत्त्वादयो हि कार्यगतलाघवादिहेतवः कारणभूतपृथिव्यादिगतास्तत्स्वभावविशेषा इति। यत्तु द्रव्यं षड्विंशतिविधं सत्त्वरजस्तमांसीत्यादिना सत्त्वरजस्तमसां द्रव्यत्वमुक्तं वरदविष्णुमिश्रैः तत्सांख्याधिकरणसूत्रभाष्यादिविरोधाचासङ्गतम्।

शब्दोऽस्मदादिश्रोत्रग्राह्यः पञ्चभूतवर्ती स द्विधा वर्णात्मकोऽवर्णात्मकश्चेति अकचटतपयादिप्रकाराभावसमुदायशून्यो वर्णात्मकः स एव देवमनुष्यादिताल्वादिव्यङ्ग्यः, तस्यैव पूर्वोक्तवाचकत्वादिविचारः, स च ऌकारेण सहैकपञ्चाशत्प्रकारः मातृकापाठे लऌयोरभेदात् क्वचित्प-

ञ्चाशत्प्रकारतैवोच्यते यरलादेरेव भेदभिन्नः क्यकादिः, संध्यक्षराणां ह्रस्वाःसन्तीत्येव प्रयुज्यन्ते प्राकृतादिभाषासु निबध्नन्ति च मातृकायां द्रमि*डादयः संस्कृते वाचकत्वाभावान्मातृकाबहिष्कारः, एवमेषामेव यथाकथञ्चित् त्रिषष्टिवर्णना मोक्षधर्मादौ गीयते परनाम्नि च सहस्राक्षरत्वाम्नानं तु तत्रैव वर्णान्तरसद्भावेन वा तेषामेव वर्णानां सन्दर्भसंयोगादिविशेषेण सहस्राक्षरत्वायुताक्षरत्वादिभेदेनोपपत्तेर्वा । अकचटतपयादिसमस्तप्रकाराभावसमुदायवानवर्णात्मकः, स च वादित्रवारिधरमारुतविभागादिव्यङ्ग्यः । द्विविधोऽपि श्रोत्रदेशसन्निहित एव मारुतङ्ग्य इति पक्षे नभोनिष्ठस्यैव तस्य ग्राह्यत्वं, वादित्रादिस्थित एव गृह्यत इति पक्षे पञ्चभूतवर्तिनोऽपि ग्राह्यत्वमुपपद्यते तत्र दूरस्थशब्दग्रहणे श्रोत्रव्यापृतिरेव वरदनारायणभट्टारकैरुक्ता दूरे शब्दः समीपे च प्राच्यां चेत्यादिदर्शनात् गत्वा श्रोत्रेन्द्रियं तत्रतत शब्दग्रहक्षमम् आगता दूरतः शब्दमाला श्रोत्रेण गृह्यते समवायाद्यदि तदैवं न गृह्येत दूरजा-श्शब्दमान्द्यादिभिर्दूरोत्थत्वादिग्रहसंभवे अपि प्राच्यां प्रतीच्यां नेत्येवं न ग्रहसंभव इति, स चायं शब्द आकाशेन सहोत्पद्यते तद्विलये च विलीयते वाय्वादीनामप्याकाशभागत्वान्न भूतान्तरोत्पत्तिविनाशयोरस्योत्पत्तिविनाशौ, यद्वाऽऽकाशनिष्ठस्याकाशेन सहोत्पत्तिविनाशौ वाय्वादिनिष्ठस्यापि तत्तद्भूतैः सहेति अत्यन्ततीव्रताद्यापन्नेषु शब्देषु विरुद्धधर्मविरुद्धप्रत्यभिज्ञानात्स्थिरत्वम् ।

वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।

---

* द्रविड़ादय इत्युचितं भाति द्रमिडाचार्यशब्दे तु द्र-शब्दानन्तरं मि-शब्दो न तु वि-शब्दः ।

अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥

इत्यादिभिः षड्जादीनां तीव्रत्वादिभेदानां व्यञ्जकवायुधर्मत्वं श्रूयते अत एवाकल्पवर्तिनां सर्वगकारणामेकत्वम् एवमन्येषामपि। यत्तु श्रीविष्णुचित्तैरुक्तं श्रोत्रमपीतरेन्द्रियविषयवच्छब्दत्वगत्वमृदुत्वपरुषत्वमन्दत्वमध्यमत्वाद्यनन्तविशेषात्मकवस्तुग्राहकमिति तदपि निर्विशेषवस्तुग्रहणनिराकरणाभिप्रायम् उपनिषद्व्याख्याने त्वमेव प्रत्यक्षं ब्रह्मासीत्यत्र वायोर्व्यञ्जकत्वस्यैवाभिधानात् नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामीति श्रुतिवशात् वेणुरन्ध्रेत्युपबृंहणवशात् कल्पनालाघवाच्च व्यञ्जकत्वेन परैरभिमतो वायुविशेष एव तत्तद्द्रव्यविशेषघट्टनसंस्कारवशोत्पन्नतत्तच्छब्दगुणविशिष्ट उपलभ्यत इति भावयन्ति। संग्रहस्तु अव्यक्तपरिणामविशेषशरीरकपरमात्मोपादानकाः सर्वे शब्दाः न पुनः पृथग् द्रव्यतया गुणतया वा भट्टप्रभाकरमतवन्नित्याः। न चानुपादानकाः वर्णानां स्फोटाद्युपादानकत्वं चागमाध्यक्षविरुद्धं स्फोटे च नास्मादाद्यध्यक्षं प्रमाणं, योगिप्रत्यक्षं तु संदिग्धं न चागमः, कल्पकास्त्वन्यथासिद्धाः, प्रत्येकसमुदायादिविकल्पा वाचकत्व इव स्फोटाभिव्यक्तावपि समाः कल्पनं तु भवतामधिकम्। एतेन वाक्यस्फोटोऽपि स्फुटितः शब्दादर्थं प्रतीम इत्यपि न निरंशैक्यविषयकमेकवचनं विपरीतोपलम्भात् ब्रह्मण एव स्फोटशब्दवाच्यत्वे न नो विरोधः अध्यासादयस्त्वद्वैतमतवद्दूष्याः शाब्दस्मृतिः स्फोटाभावोऽपि सिध्यति न च तैः सर्वं समञ्जसं वाच्यं न च पाणिन्यादिभिस्तथोक्तम्। इतरे तु नीरन्ध्रकायासिनोऽनादरणायाः उक्तं च भट्टपराशरपादैः।

प्राकप्रयोगानुसारेण प्रकृतिप्रत्ययस्वरान्।

प्रकल्प्य वैयाकरणैर्व्युत्पाद्या पदपद्धतिः ॥

इति, सत्त्वादिगुणोक्तनयाच्च शब्दानाद्रव्यत्वसिद्धिः। ननु शब्दस्याद्रव्यत्वव्यङ्ग्यत्वे सिद्धान्तयितुं न शक्यं द्रव्यत्वकार्यत्वादेः श्रुत्यादिसिद्धत्वात्, तथा हि यद्वेदादौ स्वरः प्रोक्त इत्यादिभिर्वर्णानां वर्णान्तरोपादानत्वमुच्यते न चाद्रव्यस्योपादानत्वं निमित्तत्वमात्रविवक्षायामुपादानप्रकृतिलीनादिस्वारस्यभङ्गः निमित्तस्य प्रकृतिलयस्थानत्वाभावात् न चायमुपचारः बाधाभावात् भाष्यकारवचनविरोधाच्च, तथा च वेदार्थसंग्रहे वेदाद्यन्तरूपतया वेदबीजभूतप्रणवस्येत्युपक्रम्य वेदजातस्य सर्वस्य प्रकृतिः प्रणवः प्रणवस्य च प्रकृतिरकारः प्रणवविकारो वेदः स्वप्रकृतिभूते प्रणवे लीनः प्रणवोऽप्यकारविकारः स्वप्रकृतावकारे लीनः तस्य प्रणवप्रकृतिभूताकारस्य यः परः वाच्यः स एव महेश्वर इति सर्ववाचकजातप्रकृतिभूताकारवाच्यः सर्ववाच्यजातप्रकृतिभूतनारायणो यः स महेश्वर इत्यर्थ इत्युक्त्वा अकारो वै सर्वा वागिति चोपादाय वाचकजातस्याकारप्रकृतित्वं वाच्यजातस्य ब्रह्मप्रकृतित्वं च सुस्पष्टमित्युक्तं यथा श्रीमद्गीताभाष्ये अक्षराणामकारोऽस्मि अक्षराणां मध्ये अकारो वै सर्वा वागिति श्रुतिप्रसिद्धः सर्ववर्णानां प्रकृतिरकारोऽहमिति। तथा परिणामत्वं च शब्दस्योक्तं भाष्ये प्राकृतप्रलये स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वादिति, तथा दीपेऽपि अव्याकृतपरिणामशब्दमयेषु वेदेष्वित्यादि, यथा यस्य वेदाः शरीरमित्यादिभिरपि द्रव्यत्वं सिद्धं द्रव्यस्यैव हि शरीरत्वं शरीरलक्षणसिद्धम्। आत्मसिद्धावपि दृश्यन्ते गुणा अपि शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तो धर्म्यति-

वर्तिनश्च अतिसूक्ष्मो दूरगमनधर्मा भौतिको हि शब्दः स खलु शङ्खमुखादेर्द्वीयसोऽपि दृशां नोदनविशेषेण लोष्टादिरिव यावद्वेगमभिप्रतिष्ठते स्पर्शरहितोऽपीत्यारभ्य शब्दस्य नभोगुणत्वप्रतिक्षेपो वायवीयत्वमुच्चारणानन्तरभावित्वं व्यञ्जकपक्षदूषणानि च विशदमुपपादितानीति एवं स्थिते वर्णानामुपादानत्वादिर्यथार्थ एवेति वा काल्पनिक इति वा दृष्टिविधिरिति वा औपचारिक इति वा निर्वाहः स्यात्, तत्र न प्रथमः वर्णनित्यत्ववादिनां मत उपादानोपादेयभावाभावात् नैयायिकमते त्वसमवायित्वाभ्युपगमात् सदनारम्भाच्च। भगवद्यामुनमुनिपक्षेऽपि वायोरेव वर्णोपादानत्वात् भाष्यकारैरप्यहङ्कारपरिणामत्वमात्राभिधानात् अव्याकृतपरिणामवचनवदारम्भपर्यायाभ्युपगमज्ञापकाभावात्, वचनेषु च वर्णानामनियतोपादानत्वोपादेयत्वदर्शनात् विरुद्धोपादानोपादेयभावदर्शनात् सिद्धे च विकल्पायोगात्, गोमयवृश्चिकादिनये च गौरवात् भेदादृष्टेश्च उपादानावच्छेदकतयोपादनत्वमिति चेन्न तथात्वेऽपि मृत्पिण्डगतपिण्डत्वादिवदनुपादानत्वं विशिष्टस्योपादानत्वेऽपि विशेषणानां विशिष्टत्वाभावेन तदभावात् रूपवत्त्वाभिधानं चात्यन्तदुःस्थं तेजः प्रभृतिष्वेव रूपोत्पत्तेः घटादिवच्चाक्षुषत्वप्रसङ्गात् स्पर्शवत्त्वादिप्रसङ्गाच्च सर्वत्रोपलभ्यमानस्य स्थानविशेषानुपपत्तेश्च। नापि द्वितीयः स हि सर्वस्य वा प्रपञ्चस्य वा वर्णानामेव वा नाद्यौ स्ववचनविरोधादिभिः शून्याद्वैतादिमतभङ्गात् नेतरः आगमिकत्वाविशेषण प्रकृत्यादावपि प्रसङ्गात्, अनुपपत्तेश्च सर्वत्र सुहृत्वात् आगमिकस्योपपत्तिबाध्यत्वाभावात् तत्प्रामाण्यस्य च स्थितत्वात् अनुप-

लम्भस्य चायोग्ये बाधकत्वाभावात् अन्यथाऽतिप्रसङ्गाच्च । अस्तु तर्हि तृतीयः पक्षः तथा हि केषुचिद् ग्रन्थेषु प्रणवांशभूताकारोकारादिविकारत्वं वर्णानामुच्यते केषुचित् हल्लेखांशभूतहकारादिविकारत्वं तथा च प्रक्रियान्तरेण श्रुतिः भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात् सुवरिति सामवेदात् तानि शुक्रियाण्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इति तानेकधा समभरत्तदेतदोमितीति । स्मृतिश्च ।

अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥

इति, तथा सर्वमन्त्राणां प्रणवबीजत्वं साधारणमुक्त्वा प्रतिमन्त्रबीजाक्षराणि च कल्पैरुच्यन्ते तथा प्रलये मन्त्रं संछाद्य रक्षतीति छन्दांसि च वर्ण्यन्ते तथा तत्तदक्षराणां सितरक्तपीतकृष्णादयो रूपविशेषाश्चाभिधीयन्त एकस्यैव वाक्षरस्य विनियोगभेदेन मन्त्रभेदेन रूपभेदः प्रकीर्त्यते एवं नियतानियतस्थानविशेषादयोऽपि । न च परमार्थतो रूपस्थानादिभेदो वर्णानां किंतु तादृशानुसंधानेनादृष्टविशेषो भवतीत्येतदेवाभिप्रेतं यन्त्रवृत्तान्तवत्, अन्यथा व्याकुलोपादानोपादेयभावरूपस्थानाद्युपदेशेन तेषामप्रामाण्यप्रसङ्गः, अतो दृष्टिविधानमेवात्रोचितमिति, अयमपि पक्षो बलक्षिनः तथा हि ॐ मित्येतदक्षरमुद्गीथमुपासीतेत्यादिवत् प्रणवं सर्वाक्षरोपादानमुपासीतेत्येवमादिरूपेण विधिर्न दृश्यते किंतु तत्त्वोपदेशवचनव्यक्तिः तथाऽपि दृष्टिविधित्वे ब्रह्मणो जगत्कारणत्वादावपि प्रसङ्गात् तत्त्वतर्कप्रतिपादकभाष्यकारवचसि च दृष्टिविधित्वं दूरापेतम् अकारावच्छिन्नाकारांशे वर्णोत्पत्तिरित्यादिकुशकाशावल-

त्वेन प्रकृतिविकृतिभाव इति चेत् तर्हि तद्विशिष्टस्य प्रकृतित्वं तस्मिन्नुपचरितं स्यात्, दृष्टिविधिश्च गतः अस्त्वेवमेवात्रेति चेत् तर्हि वाचकजातप्रकृतिभूताकारस्य वाच्यजातप्रकृतिभूतपरमात्मवाचकत्वाभिधानमयुक्तम् अतः प्रशंसापरतया तत्तत्कार्यशक्त्यादियोगेन वा प्रकृतिविकृतिभावरूपविशेषादिव्यपदेश औपचारिकः गुणत्रयादौ लोहितशुक्लकृष्णादिव्यपदेशवत् इत्येवं स्थिते पञ्चमः पक्ष उच्यते क्वचिद्याथार्थ्यं क्वचिद्भ्रान्तिः क्वचिद् दृष्टिविधिः क्वचिदुपचारश्चेति अबाधिते प्रथमः बाधिते निर्मूले च द्वितीयः ध्यानविधौ प्रायशस्तृतीयः बाधिते समूले संबन्धशालिनि चतुर्थ इति । नन्वेवमपि न कश्चित्सिद्धान्तः तथा हि शब्दो द्रव्यमद्रव्यं वा द्रव्यत्वे च किं कस्योपादानं रूपादिसंबन्धश्च कीदृशः, अद्रव्यत्वे तु कथमुपादानत्वरूपसंबन्धादिरिति अत्रोच्यते सयूथ्यमतभेदेन द्रव्यमद्रव्यं च शब्दः द्रव्यत्वपक्षेऽपि वायवीयोऽवायवीयश्चेति वायवीयत्वेऽपि दीपादिधर्मभूतप्रभावद्भेर्यादिधर्मभूतः प्रहारप्रकाश्य इत्येकः पक्षः व्यजनेन पवनत्प्रहारेण जातः प्रसरतीत्यपरः पक्षद्वये चायं स्पर्शरहितः स्पर्शरहितोऽपीति वचनात् वायवीयत्वेऽप्यनुपलम्भात्स्पर्शाभावः भेरीशब्द इत्यादिव्यवहारस्वारस्यात्प्रथमः पक्षः तरङ्गमारुतादिवत्तथाव्यवहारोपपत्तावन्वयव्यतिरेकात्तदानीमेवोत्पत्तिरित्यपरः व्यञ्जकस्य कारकस्य वा वायोरागमनावश्यंभावात्तद्व्यङ्ग्यस्य तदुत्पाद्यस्य वा शब्दान्तरस्याभ्युपगमे गौरवात् वाय्वन्तरादृष्टव्यञ्जकत्वादिशक्तिकल्पनवच्छब्दत्वमेव श्राणत्वनिबन्धनं वायोरस्त्विति वायवीयत्वमिच्छतामभिमानः तत्र चोपादानादिवादादृष्टिविध्यादय एव, अवायवीयद्रव्यत्वे तु यथोपदेशं कल्पभेदेनाण्डभेदेन वोपादाना-

नियमः तत एव रूपस्थानाद्यनियमोऽपि, अनुपलम्भस्तु रूपादीनामयोग्यत्वात् अनुपलम्भबाधितांशे वा दृष्टिविधित्वादिस्वीकारः । अथाद्रव्यत्वपक्ष उच्यते तत्र तावत्सत्त्वरजस्तमसामद्रव्यत्वाय भाष्यकारोक्ता युक्तयः शब्दस्यापि समानाः अव्याकृताहङ्कारपरिणामव्यपदेशोऽप्यागन्तुकधर्मत्वाभिप्रायेण घटते आत्मसिद्ध्यादिवचनं परमतेनैकदेशिमतेन वा घटते भट्टपराशरपादैर्वाक्यनिपरूणे शब्दस्य गगनगुणत्वमेवाभिहितं गगनगुणशब्दादिस्वरूपस्थितीः प्रवर्तयता भगवतैव योग्यार्थैदमर्थ्येन वाक्यप्रवाहस्य पूर्वमेवोपात्तत्वादिति यस्य वेदाःशरीरमित्यादि तु देवताविशेषविषयत्वेनोपपन्नम् एवमेवोपादानरूपस्थानादिव्यवहारोऽपि, एवं तस्य प्रकृतिलीनस्येत्याद्युपपन्नं भवति तत्तद्देवतान्तरेषु तत्तदुपादानत्वादिव्यवहार उपचारदृष्टिविध्यादिना तत्प्रयोगानुकूलमुपपाद्यः अनियतोपादानत्वादिकं तु तत्त्वेष्वेवानियतोपादानत्ववदागमतदाभासयोः प्रामाण्याप्रामाण्याभ्यां निर्वाह्यम् आगमेषु न्यायतो नेयम् एतेनाकारहकारविवादो निरस्तः तत्र च न विरोध इत्येके तथा हि अकार एव पूर्वतया परतया वा स्थित्वा षोडशवर्णमुपलक्षयति स एवोपादानम् अत एव चाचां हलां च मध्ये ह्यात्मकस्य तस्य पाठः अनुभवसिद्धं च प्रथमषोडशयोर्विपर्यस्तसंहितायां हत्वम् यथैकारादीनां यत्वादिकमिति उक्तं चैतल्लक्ष्मीतन्त्रे अत एव अ इति ब्रह्मेति षोडशकशिरस्क एवाकार आम्नायते । अन्ये त्वेवं मन्यन्ते न तावत्प्रणवे तस्य श्रवणमस्ति नाप्यकारो वै सर्वा वागित्याम्नातं नाप्योकारादेशः सविभक्तिकतया घटते विष्णुरेव सर्वकारणमिति प्रमाणनिर्णीतं तस्य प्रथम एव वाचकतया प्रसिद्धः यद्यपि क-

चित् प्रमाणभूते तन्त्रे ह्कारपरिग्रहोऽप्यस्ति तथापि तस्य परमात्मान्तरत्वमभ्युपगम्येति मन्तव्यम् । प्रणवात्सवोत्पत्तिप्रकारस्तदंशद्वारेति श्रुत्यादिभिरनुसंधेयः । तत्र त्रिवेदीप्रसङ्गे मकारपर्यन्तनिरूपणमथर्वादिविवक्षायां तु नादशिरस्त्वं तदेवमकारगार्हपत्यगायत्रीप्रथमपाद ऋग्वेदस्वर्लोकादिप्रकारेणावान्तरगर्भभेदोऽनुसंधेयः अकारात्प्रणवोत्पत्तिः कथमिति चेत् अकारवाच्यात्परमात्मनः प्रणवाधिष्ठातृदेवताया वा तदंशदेवतादीनां वोत्पत्तेरिति सुस्थम् । तदेवमद्रव्यत्वपक्ष एव शब्दस्य श्लाघ्यः, एवं च सति श्रोत्रवृत्तिर्वा व्यञ्जकवाय्वागमनं वा शब्दवद्वेर्याद्यवयवागमनं वा शब्दवद्वाय्वागमनमेव वा यथाप्रतीति भाव्यमिति ॥

अस्मदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावृत्ताद्रव्यं स्पर्शः स त्रिविधः शीतोष्णानुभयात्मकभेदात्, अप्सु शीतः तेजस्युष्णः क्षितिपवनयोरनुष्णाशीतः भूतान्तरसंसर्गात्सर्वत्र स्पर्शसंकरावभासः न तत्त्वतः तथा ऽन्वयव्यतिरेकात्, एवं क्वचित्स्पर्शानवभासोऽपि तत एव च त्वचा रत्नालोकाद्यग्रहणं तदुक्तमन्वयाधिकरणे भेदाभेदविरोधनिदर्शने विवरणकारैः यथाशीतं न कदाचिदप्युष्णं वाय्वौष्ण्यं तु तत्स्थाग्नेः न तु तत्त्वाकारात्, पाकजो हि गुणः पाकादपैतीति हि तत्त्वविदः वह्निरूपानुपलम्भस्तुल्यरूपाभिभवात् तत्स्पर्शोपलम्भस्त्वन्यस्पर्शानभिभवादित्युपलब्धिव्यवस्थाप्यमिति अनुष्णाशीतोऽपि स्पर्श एव न तु शीतोष्णविरहमात्रम् आकाशादावपि तथोपलम्भप्रसङ्गात् वायुपृथिव्योः स्पर्शवत्त्वस्य श्रुत्यादिसिद्धत्वाच्च न च सामान्यं तदिति वाच्यं निर्विशेषसा-

मान्याभावात्, अनुपलब्धशीतोष्णविशेषं तदेवेत्यपि न वाच्यम् अत्यन्तानुपलब्धस्य विशेषस्य कल्पकाभावात् आगमाभावाच्च। केचित् तु सजातीयवृद्धिहेतुत्वस्य सामान्यतोदर्शनात् शीतस्य वातवृद्धिहेतुत्वाद्वातोऽपि शीत इति वर्णयन्ति तदसत् रसादिसाम्ये प्रभावादिवैषम्यवदत्रापि स्वभाववैचित्र्योपपत्तेर्विपक्षे बाधकाभावात्, न च वायोः शैत्यानुपलम्भप्रसङ्गो बाधकः हिमाद्यनुपहितदशायामातपाद्युपहितदशायां च प्रसङ्गस्येष्टत्वात् हिमाद्युपहितदशायां तु शीतोपलम्भस्यौपाधिकतयाऽन्यथासिद्धत्वात् अन्यथा उष्णानुपलम्भप्रसङ्गादुष्णस्य कल्प्यत्वात्। किं तत्रानुग्राह्यमिति चेत् उष्णारम्भकत्वं न ह्यनुष्णमुष्णद्रव्योपादानमस्ति उष्णस्य च तेजसो वायुरुपादानमिति तदेवमनुष्णाशीतो वायुः पृथिवी च, स्पर्शः पुनर्द्विधा पाकजोऽपाकजश्चेति पृथिव्यां पूर्वः, उत्तरेषु त्रिषु परः तत्रामृतगरलकपिकच्छुतूलोपलगोब्राह्मणचण्डालादिस्पर्शविशेषा अपाकजभेदाः, अनुष्णाशीतस्पर्शवत्त्वमात्रेण प्रथममव्यः पृथिव्युत्पत्तिः परस्तात्पाकभेदाद्भेदोऽन्वयव्यतिरेकादिसिद्धः, मृदुकठिनभावादयोऽपि स्पर्शविशेषा एव स्पर्शनेनैव तदुपलब्धेः चक्षुषा तु तदविनाभूतरूपादिग्रहणद्वारा स्पर्शमात्रस्येव तेषामपि यथायथमनुमानमेव करकादिकाठिन्यं पृथिवीयोगात् मृदुपचनादिव्यवहारो वेगमान्द्यादिना। केचित्तु तेषां संयोगविशेषत्वमातिष्ठन्ते गोब्राह्मणचण्डालादिषु कथं स्पर्शभेद इति चेत् तदधीनशुद्ध्यशुद्ध्यादिभेदात् जातिभेदादेव तदुपपत्तिरिति चेत् जातिभेद एव कुतः, मातापितृसंबन्धप्रकारभेदादिति चेन्न मानसब्राह्मणादिषु तदभावात्। यद्वा धर्माधर्मतारतम्याधीनसत्त्वरजस्तारतम्याच्छक्तितारतम्याद्वा शुद्ध्यादिसि-

द्भिरिति न स्पर्शभेदास्ते अपाकजस्पर्शेषु तु तारतम्यं संसर्गादिभेदात् पवनसलिलयोरपि पाकजस्पर्शः किं न स्यादिति चेत् औष्ण्यशान्तौ स्पर्शान्तरस्य पाकजस्य पृथिवीवदननुवृत्तेः औष्ण्यमेव हि तर्हि पाकजं तत्र स्यादिति चेन्न वायुशैत्यवदौपचारिकत्वोपपत्तेरिति एवं पृथिव्यामपि शीतोष्णस्पर्शोपलम्भ औपाधिकः उपाधिसन्निधिमन्तरेण कदाचिदप्यनुपलम्भात् पाकजत्वे तु पश्चादपि रूपादिवदनुवृत्तिः स्यात् निर्मृष्टेऽपि सलिले निर्वाणेपि शिखिनि पार्थिवेषु शीतोष्णस्पर्शावुपलभ्येते इति चेत् सूक्ष्मसंश्रयणात्क्षणान्तरे तु तावतोऽपि निवृत्तेरिति ॥

अस्मदादिचक्षुरिन्द्रियैकग्राह्यविजातीयव्यावृत्तमद्रव्यं रूपम्, तच्च सितरक्तकृष्णपीतभेदं सितादिप्रतिपत्तिव्यवहारास्तल्लक्षणानि, तत्र सलिलकलधौतशङ्खशुक्तिशशाङ्कादीनां रूपविशेषाः सितभेदाः, हुतवहजपादाडिमबन्धुजीवविद्रुमपद्मरागादीनां रक्तभेदाः, काञ्चनारहरितालहरिद्रादीनां पीतभेदाः, मरकतमधुकरजलधरतिमिरतमालदूर्वादीनां कृष्णभेदाः, पीतरूपमपि रक्तावान्तरभेदं केचिदिच्छन्ति रोहितशुक्लकृष्णानामेव तेजोऽबन्नेषु श्रवणात् प्रकारान्तरेण रूपं द्विधा भास्वरमभास्वरं चेति तेजोगतं भास्वरं क्षितिसलिलगतमभास्वरं, तेजसि रूपं रक्तभास्वरं सलिले तु शुक्लभास्वरम् । पृथिव्यां बहुविधमभास्वम् अत्रापि संसर्गादनियतभासादिचित्रं नाम पञ्चमं रूपमिति वैशेषिकादयः तदसत् एषामेवैकसंघातवर्तिनां समुदायविशेषतस्तत्प्रतीतिव्यवहारयोरुपपत्तेः नानावर्णचूर्णेषु अरञ्जितस्थलादिविलक्षणप्रतीत्यभावात् अवयविरूपारम्भकतयाभवद्भिस्तेषामेवाभ्युपगतत्वात् अवयव्यभ्युपगमेऽपि

नानारूपाश्रयत्वस्य प्रतीतिव्यवस्थाप्यत्वात् संयोगतदभावादिवद्भागभेदस्योपलभ्यमानस्य नियामकत्वात् व्याप्यवृत्तिरूपान्तरजातीयरूपारम्भकतया बाधे तु गुणत्वादिमात्रेण संयोगादावपि प्रसज्यते, एवमेव चित्ररसगन्धानामपि निर्वाहः ।

अस्मदादिजिह्वैकग्राह्यविसजातीयेतरोरसः, स षोढा मधुराम्ललवणतिक्तोष्णकषायभेदात्, एषां लक्षणं पूर्ववत् तत्रेक्षुक्षीरगुडादिरसा मधुरभेदाः चूतचिञ्चामलकादिरसा अम्लभेदाः, सैन्धवलवणाविकारादिरसा, लवणभेदाः । किंपाकनिम्बादिरसास्तिक्तभेदाः, शुण्ठीमरीचिसर्षपादिरसा उष्णभेदाः, हरीतकीविभीतकचूनाङ्कुरादिरसाः कषायभेदाः, तिक्तावान्तरभेद एवोष्णादिरिति केषाञ्चित्प्रतिभासः आयुर्वेदतश्चैते विशदमनुसंधेयाः ।

अस्मदादिघ्राणग्राह्यविसजातीयेतरोगन्धः, स च द्विविधः सुरभिरसुरभिश्चेति तयोरपि लक्षणादिकं पूर्ववत् पटीरमृगमदघुसृणचम्पकादिगन्धाः सुरभिभेदाः, पूतिविस्रादिगन्धा असुरभिभेदाः, अयं च गन्धः पृथिव्येकवृत्तिः अयो दहतीतिवत् सलिलपवनादिषु चम्पकपाटलादिसंसर्गात्तदुपलम्भः तत्तत्संसर्गाधीनत्वस्यान्वयव्यतिरेकसिद्धत्वात् स्यादेतत् पञ्चीकरणादेव पञ्चभूतेषु स्पर्शादिसङ्करः प्रागेव सिद्धः ततश्चेदानीं व्यञ्जकविशेषवशात् क्वचित् क्वचिद्गुणोऽव्यक्तरूप उपलभ्यतां मृगजलादिवदिति चेत् अस्त्वेवं किमेतावता भूतान्तरेषु गुणानां स्वाधारसंसर्गमन्तरेण वृत्तिरुपपादिता संसर्गस्तु प्राक्तन इदानीन्तनो वेति विचार्यम्, तत्र यथायथं द्वयमपि पूर्वस्यागमसिद्धत्वात् पाटलादिसंसर्गस्य चेदानीमध्यक्षसिद्धत्वात् । अथौपनिषदानां

पाकजगुणप्रक्रिया उत्पत्तिदशायां कृष्णरूपा पृथिवी यत्कृष्णं तदन्नस्येति श्रुतिस्वारस्यात् भाष्यकारैश्चाकाशनैल्यस्य पञ्चीकरणलभ्यपृथिव्यंशनिबन्धनत्वाभिधानात् पञ्चीकरणात् प्राक् च पाकजत्वायोगात्, प्रथममेव विशेषयोगिनी कथं सा जातेति चेत् सलिलदहनरूपस्पर्शविशेषावालोक्य संतोष्टव्यम्, अस्त्वेवं प्रथमं कृष्णा पृथिवी स्पर्शरसगन्धास्त्विदानीं तत्र किंप्रकाराः उच्यते स्पर्शस्तावद्वायाविवानुष्णाशीतमात्रः तद्वदेवापाकजश्च विषामृतदुःस्पर्शादिस्पर्शविशेषा एव पाकाधीनाः अनुष्णाशीतमात्रं हि सर्वेष्वपि पार्थिवेषूपलभ्यते अतस्तावन्मात्रस्य स्वाभाविकत्वमुचितं रसोऽपि मधुर एव प्राथमिकः विशेषादर्शने कारणभूतजलगतमाधुर्यानुविधानस्योचितत्वात् स्पर्शवदस्यापि प्राचुर्योपलम्भात् महापृथिवी सर्वा प्रायशो मधुरैव ह्युपलभ्यते, आम्ललवणादयः काचित्का रसविशेषाः पाकाधीनाः, तथा मधुरविशेषा अपि अन्वयव्यतिरेकाविशेषात् गन्धोऽपि सुरभिरेव प्राथमिकः अस्यैव महापृथिव्यां पूर्ववत्प्राचुर्यात् पूतिविस्रप्रभृतयः सुरभिविशेषाश्च पूर्ववत्पाकाधीनाः एवमनुष्णाशीतकृष्णमधुरसुरभिस्वभावा प्रथमं पृथिव्युत्पन्ना अतः पाकभेदेनानुष्णाशीतस्यैव भेदैर्दुष्परिमर्शादिस्पर्शैः कृष्णभेदैश्च मरकतहरिततमालकुवलयादिरूपैः अकृष्णैश्च सितरक्तादिभिः मधुरभेदैश्चेक्षुक्षीरगुडादिरसैः, अमधुरैश्चाम्ललवणादिभिः सुरभिभेदैश्च चम्पकमृगमदादिगन्धैः, असुरभिभिश्च पूतिविस्रादिभिः संबध्यते अस्यां च गन्धरसरूपस्पर्शशब्दाः क्वचित्सहैवोत्पद्यन्ते सहैव च विनश्यन्ति क्वचिच्चान्यतमानुवृत्तिरन्यतमनिवृत्तिश्च यथोपलम्भं पाकवैषम्यस्याङ्गीकर्तव्यत्वात्, अत्र चैकेनाग्निसंयोगेन पूर्वसमुदायनिवृत्तिः अन्येनोत्तरसमुदायोत्प-

त्तिरित्येके एकेनैव पूर्वनिवृत्तिरुत्तरोत्पत्तिरपीति वयं वदामः यथैकयैव सामग्र्योत्पत्स्यमानप्रागभावमात्रभेदभिन्नयाऽनेककार्योत्पत्तिर्निर्व्यूढा तद्वत्प्रध्वंसमानतत्तत्स्वरूपसहकारिभेदभिन्नयाऽनेकप्रध्वंसोऽप्युपपन्नः उभयविधप्रागभावादिभेदभिन्नया च तथैव पूर्वसमुदायनिवृत्तिरुत्तरसमुदायोत्पत्तिश्चोपपन्ना निवृत्तेश्चोत्तररूपमात्रतयाऽस्माभिरभ्युपगमात् परमार्थतो न कार्यद्वैविध्यमस्ति प्रतियोगिभेदभेदतो व्यपदेशभेद एव केवलम् ॥

यत्तु प्राक् निरासप्रसङ्गेन भट्टपराशरपादैरुक्तं न खलु पूर्वरूपविनाशिकैव व्यक्तिरुत्तरोत्पादिका पाकलक्षणाग्निसंयोगानां भिन्नत्वादिति तत्परमतानुसारेणेति मन्यामहे एकस्यैवानेककार्यहेतुत्वोपपादनादिति पाकावान्तरभेदाच्च गन्धाद्यवान्तरभेदसिद्धिः, पाके च पीलुपिठरपाकभेदाद्विप्रतिपद्यन्ते तत्र नोभयमप्यस्माकं परमाण्ववयविनोरभावात्, अतः संहितावस्थायां पाको विभक्तावस्थायां वेति चिन्ता परिशिष्यते तत्र यथा संभवमुभयमपि, प्रथमं तावद् घटादीनामशिथिलानामेव पाकभेदेन रूपभेदोपलम्भात् उपलम्भस्तावद्वैशेषिकाराणामपि समः किं त्ववयविरूपादीनां यावदाधारभावित्वनियमाभ्युपगमादवयवविशेषगुणैरवयविविशेषगुणारम्भनियमाभ्युपगमाच्च पूर्वावयविनः परमाणुपर्यन्तो नाशः द्व्यणुकादिक्रमेण पुनरन्यस्यादृष्टवशादारम्भइति कल्पितं, द्वितीयमपि दहनसन्निकर्षमात्रेण विलयविशरणादीनामेव मधूच्छिष्टानां पाक उपलम्भादिति एतेनैकदेशपाकोऽप्युपपन्न इत्युक्तं भवति ।

संयुक्तप्रत्ययनिमित्तं संयोगः स च स्वरूपमात्रस्वरूपो नैरन्तर्यमात्रस्वरूपो वेति केचित् तत्र न स्वरूपमात्रं

स्वरूपयोः सतोरेव पूर्वोत्तरकालयोः संयुक्तप्रत्ययाभावात्, नापि द्वितीयः भावान्तराभाववादिनं प्रत्यविवादादेव सोऽपि ह्यासन्नदेशसंयोग एव ह्यस्मन्मते स्यात् देशेनापि नैरन्तर्यमेव स्यादिति चेन्न तत्राप्युक्तविकल्पानतिक्रमात्, तत्रापि हि स्वरूपातिरिक्तस्य नैरन्तर्यस्य भिन्नदेशविशेषसंयोगाभावरूपतया सिद्ध एव संयोगः अस्य च स्वाभावसादेश्यमुपलभ्यमानमंशभेदप्रयुक्ततया न विरोधावहं निरवयवेष्वपि संयोगहेतुरौपाधिकोंऽशः न चोपाधावप्येवमित्यनवस्था ज्ञप्तावुपाधिसंश्लेषमात्रातिरिक्तानपेक्षणात्, उत्पत्तावन्येनावच्छेदेऽपि बीजाङ्कुरानवस्थावददोषात्। यद्वा निरवयवेष्वभिदुरतया पृथङ्निर्देशायोग्यत्वात् स्वाभाविकांशभेदो भवतु न चैवं सत्येकत्वानेकत्वमवयवित्वं संघातत्वं वा प्रसज्यत इति वाच्यं तादृशस्यांशस्य भेदव्यपदेशहेतुत्वाभावात् एतावदेकानेकत्वं प्रमाणबलादुरपह्नवमभ्युपगतं वा भवतु। यद्वा यन्निरवयवं तन्नैयायिकाद्यभिमतजातिवत्सर्वत्र संयोगिनि संपूर्णं वर्तताम्, तदेतत्सूत्रकारैरेवाशङ्क्य परिहृतं कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेत्यादिना, तत्र च दीपः * सकलेतरविसजातीयं श्रुत्येकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यं च भवत्यनन्तं च भवतीति परिमितशक्ति वस्तु चोद्यं न तत्र प्रसज्यते यथा जातिवादिनो जातिरेवामूर्ता खण्डमुण्डादिष्वत्यन्तविलक्षणेष्वनन्तेष्वपि परिसमाप्यैववर्तते न तत्रेतरवस्तुचोद्यमिति जगत्कारणत्वं सम्भवतीति तत्रैवाधिकरणे स्वपक्षदोषाच्चेति सूत्रे प्रधानादिकारणपक्षे दोषाच्च ब्रह्मैव कारणं तत्रैव लौकिकवस्तु-

* अयं च श्रीदक्षीभाष्याचार्यप्रणीतः संक्षिप्तो ब्रह्मसूत्रार्थनिरूपणपरो ग्रन्थः।

विसजातीयत्वेन प्रधानादेरुक्तदोषा नैव प्रसज्येरन्नित्युक्तम् । एतेन प्रधानपरमाणुवासनासंविद्ब्रह्मप्रभृतीनां निरंशानामेव यथाभागपरिणामावरणानावरणानेकविषययोगादिरुपपद्यत इत्युपरम्यते, तद्वदेव संयोगस्य संयोगिनो वा पूर्णस्य नानेकसंबन्धोऽनुपपन्नः क्षणिकपरमाणुवादिनापि पुञ्जदशायामेकस्य परमाणोरंशभेदमन्तरेणानेकनैरन्तर्यमभ्युपगतं विज्ञानवादिनामेकस्यानेकाकारत्वं, माध्यमिकस्य तु संयोगे को विशेषप्रद्वेषः, इदमेव शून्यत्वद्वारं वस्त्विति चेन्न शून्यत्वसदसत्त्वयोरुक्तौ विरोधात्, द्विष्टं न किञ्चिद्दृष्टमिति चेन्न अस्यैव दृष्टत्वात्, न चान्यस्य तथात्वादर्शनादन्यस्यापि तथात्वाभावः प्रत्येकं प्रतिनियतासाधारणस्वभावानां भङ्गप्रसङ्गादिति, स चायं संयोगो द्विधा कार्योऽकार्यश्चेति पूर्वः परिमितानां, परिमितापरिमितानां च उभयप्रेरणादन्यतरप्रेरणाद्वा यथा मेषयोः स्थाणुश्येनयोर्वा, संयोगजमपि संयोगं वैशेषिका वर्णयन्ति तदसत् अवयव्यभावात्, अवयवसंयोग एव हि संघातस्य संयोगः, उपलम्भोऽपीदानीमेकदेशेन संयुक्तमित्येव, अस्तु वाऽवयवी तथापि येन हेतुना यदैवावयवः संयुज्यते तेनैव तदैवावयव्यपि संयुज्यतां, न हि हस्तपुस्तकसंयोगानन्तर्यं देवदत्तपुस्तकसंयोगस्योपलभ्यते हस्तस्पन्देनैव कारणकारणवर्तित्वादसमवायिनामापन्नेन देवदत्तपुस्तकसंयोगस्याप्युत्पत्तिरुपपद्यते, हस्तस्पन्दे च तदवच्छिन्नशरीरस्यापि स्पन्दसिद्धेस्ततो वा तत्संयोगः कर्मणोऽपि संयोगादिवद्यथोपलम्भं स्वाभावसादेश्यमङ्गीकर्तव्यं यदा चान्यानीतपुस्तकेन देवदत्तहस्तः संयुज्यते तदा देवदत्तेनापि कथं न युज्येत हस्तस्य तस्य च निःस्पन्दत्वाविशेषात्, आभिमुख्यस्याप्युभयोरविशेषात् । एतेन विभागजविभागोऽपि निराकृतः,

विभागं चान्तर्भावयिष्यामः। अकार्यस्तु संयोगो निरन्तरयोर्निःस्पन्दयोर्द्रव्ययोः स नास्तीति वैशेषिकादयः। विभवो मिथः संयुक्ताः निरन्तरद्रव्यत्वात् संप्रतिपन्नवत् असंयुक्तत्वे सान्तरत्वप्रसङ्गः, यश्च विभूनां नैरन्तर्यमात्रमिच्छेत् तेनापि तत्रायमपरिहार्यः, अस्मन्मते नैरन्तर्यस्य समासन्नदेशसंयोगरूपत्वात् गुणादिषु तु निरन्तरत्वबुद्ध्यभावात्, न च हेत्वभावात्संयोगाभाव इति वाच्यं ज्ञापकस्योक्तत्वात् कारणस्य निवृत्तौ कार्यमात्रस्य निवृत्तिरितीश्वरज्ञानचिकीर्षाप्रयत्नेषु भवद्भिरेव प्रतिपादनात् विभूनामपि स्वकार्यजननादेरीश्वरानुप्रवेशनिबन्धनत्वात्। औपनिषदश्चायमर्थः तथा च श्रुतयः सर्वव्यापी च भगवान्, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इत्यादिकाः न च बहिश्चेति वचनादीश्वरज्ञानव्यतिरिक्तानां सर्वेषामप्यविभुत्वमिति वाच्यं बाह्यदेशवत्स्वेव बहिर्व्यपदेशेऽपि मुख्यान्वयात् अन्यथा ईश्वरधर्मभूतज्ञानस्याप्यविभुत्वप्रसङ्ग इति, अनुमानान्तराणि च विगीतं विभु द्रव्यं विभुद्रव्यसंयोगवत् द्रव्यत्वात् घटवत् न च व्याप्तिबलात्स्वेन संयोगप्रसङ्गः। विभुद्रव्याणामनेकत्वात् स्वेतरविभुद्रव्यसंयोगेन साध्यसिद्ध्युपपत्तेः, तथा विगीतमीश्वरसंयुक्तं द्रव्यत्वात् घटवत् ईश्वरो वा कालादिसंयुक्तः द्रव्यत्वात् घटवत्, न च कालसंयोगे कालकार्यत्वप्रसङ्गः तस्यापि तदधीनविकारत्वात् कालं स पचते तत्र न कालस्तत्र वै प्रभुरित्यादिविशेषवचनाच्चेति। यत्तु भट्टपराशरपादैर्मनोऽणुत्वसमर्थनदशायामजसंयोगो निरस्तः तदपि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावाभावश्च मनसो लिङ्गम् इत्यक्षपादकण[illegible]सूत्रोपादानप्रसङ्गेन तत्तत्सिद्धान्तसंस्कारोन्मेषवशादिति मन्या-

महे । अत एव हि तत्र कालस्वरूपाप्रत्यक्षत्वमप्युक्तम् । यत्तु तत्र न चाजसंयोगमन्तरेण किंचिदनुपपन्नमित्युक्तं यच्च स्तम्भादेर्विभुसंयोगे किं मानं न प्रत्यः ' प्रत्यक्षाप्रत्यक्ष-संयोगत्वात्, न चानुमानं मूर्तद्वयाश्रयनियमादिति चेदित्यत्र परत्वापरत्वशरीरगतितद्विकारोर्द्धज्वलनादीनां संभवार्थं विभुसंयोगावश्यंभावादिति तत्र पूर्वमेव दत्त-मुत्तरम् । यथा च मूर्तगतविकारविशेषसिद्ध्यर्थं विभुसंयोग उक्तः तथैव कालादिगतविकारसिद्ध्यर्थमपीश्वरसंयोगोऽव-श्याभ्युपेत्यः, अन्यथेश्वरशरीरत्वमपि कालादेर्न स्यादिति ॥

अथ शक्तिः सर्वकारणानां कारणत्वनिर्वाहकः कश्चिद् द्रव्यविशेषः शक्तिः तर्कागमाभ्यां तत्सिद्धेः प्रति-बन्धकमणिमन्त्रादिसन्निधौ स्वरूपसहकारिवैकल्याभावे-ऽपि यदुपरोधाद्दहनो न दहति सा ह्यतीन्द्रिया शक्तिः अयस्कान्तदुन्दुभिस्वनादिवृत्तिः तेषु चैषा विशदमवगम्यते प्रतिबन्धकाभावपर्यवसायिनां शक्तितद्धर्मनाशतदुत्पत्त्य-नुत्पत्त्यादिप्रसङ्गानामन्ततः आगमेन प्रतिहतिरिति । नन्व-स्तु तत्सिद्धिः तथाऽपि सा प्रतिबन्धकेन नाश्यते वा तद्धर्मो वा नाश्यते विरोधिनोः शक्त्यन्तरधर्मान्तरयोर्वोत्पत्तिः अविशिष्टाऽपि वा कार्यं न करोतीति पञ्चसु पक्षेषु को-ऽभ्युपगम्यत इति सौहार्देन पृच्छाम इति चेत् अस्त्वेषा-मन्यतमः तर्हि पुनः शक्त्युत्पादानियतकारणत्वप्रसङ्गप-रिहारः कथमिति चेदित्थं प्रतिबन्धकाभावसहिताद्वह्नि-स्वरूपात्तदुत्पत्तिः अप्रतिबद्धा शक्तिर्वा कार्यकरीत्यादि-भवन्निर्वाहस्यैव शक्तौ सुवचत्वात्, सा तर्हि किमर्थं कल्प्यत इति न वाच्यं दत्तोत्तरत्वात् । ननु शक्तिः शक्ता वा न वा पूर्वत्र शक्तियोगाच्छक्तौ सा च शक्तिस्तथेत्यन-

वस्था, उत्तरत्र तस्याः कारणत्वं न स्यात् अशक्तत्वात् अन्यथा सिकताभ्योऽपि तैलमुत्पद्येत शिलाशकलादिभ्यश्चाङ्कुरादिकमिति चेन्न शक्त्यन्तराभावेऽपि कारणानां कार्यानुगुण्यरूपतया तस्याः सिद्धत्वात् अन्यथा उष्णत्वमुष्णं न वा पूर्वत्रानवस्था उत्तरत्र कार्यं न जनयेत् शीतवदित्यादिप्रसङ्गस्यापि दुर्वारत्वात्, उक्तं चैतद्भगवता पराशरेण।

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥
भवन्ति तपतांश्रेष्ठ पावकस्य यथोष्णता।

इत्यादिप्रमाणसिद्धस्वभावा न कथंचिदपि परित्यागमर्हतीत्यर्थः। एवमहिर्बुध्न्यसंहितायामपि।

शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिता।

इत्यादि, एवं सर्वत्रानुसंधेयम्।

इतरे त्वेवं वदन्ति सर्वकारणानां सन्निधिमात्रोपकारिणी शक्तिः तामन्तरेण निःसारमखिलमशक्तत्वात् तथान्वयव्यतिरेकात्, अत एव सा विशेषणतया स्फुरन्त्यपि वस्तुतः प्रधानभूता सर्वत्रैका कल्पनालाघवात् तदुक्तम् एकैव तु परा शक्तिर्ज्ञानानन्दक्रियामयीति। निर्विकारा तत्संबन्धिगत्वाद्विकाराणां न शक्त्यन्तरमपेक्ष्यते शक्तत्वादनवस्थानाच्च अपर्यनुयोज्यवैभवा चेयम् अघटितघटकतया धर्मिग्राहकसिद्धेः एकत्वादेव देशकालापरिच्छिन्ना तदुक्तं व्यापिका तु पराशक्तिर्व्याप्यं विश्वमिदं जगदिति सर्वाकारोल्लासिनीत्वाद्वस्तुपरिच्छेदरहिता अचिच्छक्तिरूपेण सकला निष्कृष्टचिच्छक्तिरूपेण निष्कला तां कार्यकारणरूपप्रपञ्चकञ्चुकितां प्रपञ्चप्रलयव-

